Mithila Institute Series Ancient Texts No. 22.

# NYĀYANIBANDHĀVALI

ĀCĀRYAMATARAHASYA, NAVYAMATARAHASYA, PRATIYOGIJÑĀNAKĀRAṆATĀVICĀRA, JÑĀNA-DVAYAKĀRAṆATĀVICĀRA, LĀGHAVA-GAURAVARAHASYA AND SIDDHIPRATI-BANDHAKATĀRAHASYA.

**Edited by**

Sarvatantrasvatantra Pandit
Sri Rupanatha Jha.

**Published by**

Dr. S Bagchi, M.A., D. Litt., Director,
Mithila Institute of Post-Graduate Studies and
Research in Sanskrit Learning,
Darbhanga.
1970

*Price Rs.*

मिथिलाविद्यापीठग्रन्थमाला

प्राचीनग्रन्थावलौ द्वाविंशतितमं पुष्पम्

# न्यायनिबन्धावली

[ आचार्यमतरहस्यम्, नव्यमतरहस्यम्, प्रतियोगिज्ञानकारणताविचारः, ज्ञानद्वयकारणताविचारः, लाघवगौरवरहस्यम्, सिद्धिप्रतिबन्धकतारहस्यम् चेति । ]

मिथिलाविद्यापीठप्राध्यापकेन
झोपाह्वेन सर्वतन्त्रस्वतन्त्रेण
श्रीरूपनाथदेवशर्म्मणा

सम्पादिता

डी.लिट्.इत्युपाधिधारिणा बागचीत्युपाह्वेन डॉ. श्रीशीतांशुशेखरदेवशर्म्मणा ।

मिथिलाविद्यापीठप्रधानेन

प्रकाशिता—

शकाब्दः १८९२ संवत् २०२६ ऐशवीयाब्दः १९७०

Mithila Institute Series Ancient Text No. 22.

# NYĀYANIBANDHĀVALĪ

ĀCĀRYAMATARAHASYA, NAVYAMATARAHASYA, PRATIYOGIJÑĀNAKĀRAṆATĀVICĀRA, JÑĀNADVAYAKĀRAṆATĀVICĀRA, LĀGHAVAGAURAVARAHASYA, SIDDHIPRATIBANDHAKATĀRAHASYA.

**Edited by**

Sarvatantrasvatantra Pandit

Sri Rupnatha Jha.

**Published by**

**Dr S. Bagchi, M.A., D. Litt., Director,**

**Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning,**

**Darbhanga.**

**1970**



*The Government of Bihar established the* **Mithila Institute** *of Post-Graduate Studies and Research in Sanskrit Learning at Darbhanga in 1951 with the object,* **inter alia,** *to promote advanced studies and research in Sanskrit learning, to bring together the traditional Pandits with their profound learning and the modern scholars with their technique of research and investigations, and to publish works of permanent value to scholars. This Institute is one of the five others planned by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, four others have been established and have been doing useful work during the last eighteen or nineteen years—Nalanda Institute of Research and Post-Graduate Studies in Buddhist learning and Pali at Nalanda, K.P. Jaiswal Research Institute at Patna, the Bihar Rashtra Bhasha Parishad for research and advanced studies in Hindi at Patna, and the Vaishali Institute for Post-Graduate studies in Prakrit and Jainology at Vaishali. In the establishment of the Mithila Institute the State Government received a generous donation from Maharajadhiraja of Darbhanga for construction of the building on a plot of land also donated by him.*

2 *As part of this programme of rehabilitating and reorientating ancient learning and scholarship, the editing and publication of this volume have been undertaken with the co-operation of scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trust that this humble service to the world of scholarship and learning would bear fruit in the fulness of time.*

श्रीगुरुश्शरणम् ।

# उपोद्घातः ।

यदा खलु २-४-१९६९ खष्टाब्दे मिथिला-संस्कृत-विद्यापीठे विहार-सर्वकार-द्वारा मदीयानियुक्तिरभूत्तदैकदा तत्रत्यनिदेशकमहोदयानां प्राच्य-प्रतीच्योभयदर्शनवनकेशरिणां सततसंस्कृतसाहित्योत्थाने बद्धपरिकराणा-मस्मद्गुरुवरणभारतविख्यातप्रथितयशशर्शालिमहामहोपाध्यायडाक्टरश्री-योगेन्द्रनाथशर्मात्मजानां डा० श्रीसीतांशुशेखरवागचीमहोदयानांसविधे प्राची-नतमदुर्लभग्रन्थरत्नानां चर्चाकृता तां चर्चां श्रावं श्रावं महानुभावास्ते दुर्लभग्र-न्थरत्नप्रकाशनाय मामुत्साहितवन्तः, तत्प्रेरणयैव दुर्लभग्रन्थस्य प्रतिलिपिक-रणे सम्प्रवृत्तोऽहम् , प्रतिलिपिकरणे बहुशोऽन्विष्यमाणेऽपि नोपलब्धमाचा-र्यमतस्य पुस्तकान्तरम्, अनेकशः मृग्यमाणेऽपि संस्कृतपुस्तकालये संस्कृतविदु षां समीपे चास्य चर्चापि नोपलब्धा । अगत्या सर्वतन्त्रापरतन्त्राणां रविव्रत-विवेकैकादशीव्रतनिर्णयन्यायसूत्रविवरणच्छिन्नमस्तामाहात्म्यप्रभृतिग्रन्थक - र्तॄणांमिथिलावयवभूतदरभङ्गान्तर्गत-उजानग्रामनिवासिनां तपस्विवराणां श्रीनीलाम्बरझामहोदयानामस्मत्पितृचरणानां संस्कृतसंग्रहालयैकमा-त्रादर्श पुस्तकबलेनेव प्रतिलिपिकरणे संप्रवृत्तः . यद्यपिआदर्शभूतपुस्त-कस्य जीर्णतां कीटाणुग्रसितत्वञ्च विलोक्य प्रतिलिपिकार्येऽहमसमर्थः । तथापि मिथिलाविद्यापीठस्थप्राध्यापक डा० विद्वद्वर्यश्रीमहाप्रभुला - लगोस्वमिमहोदयानामस्मदभिन्नहृदयानां प्रकाशनकार्ये बद्धपरिकरा-णामसीमसाहाय्येन प्रतिलिपिकरणेसमर्थोऽहमतस्तावुभौ धन्यवादार्हौ ।

अयं प्रबन्धः आचार्यमतरहस्यम् , मध्यमतरहस्यम, ज्ञानद्वयकार णताविचार :, प्रतियोगिज्ञानकारणताविचारः , लाघवगौरवरहस्यसिद्धि-प्रतिबन्धकतारहस्यञ्चेतिदुर्लभतमषढग्रन्थनां संग्रहात्मकः ।

१ तत्र प्रथमे लिङ्गोपधानमतप्रतिपादनम् , लिङ्गोधानमतस्य-लिङ्गोपहितेलैङ्गिक भानमितिमतस्य, अर्थात् लिङ्गविशिष्टे हेतुभूतधूमादिविशिष्टे , लैङ्गिकस्य-साध्यस्यवह्न्यादे र्भानमितिमतस्य , प्रवर्त्तकाचार्यपदविभूषितपद्म -

क्यप्रमाणपारावारीण उदयनः, तन्मतेसाध्यव्याप्यहेतुविशिष्टे पक्षे साध्यस्य भानं भवति। एवञ्च वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् वह्निनिरूपितव्याप्तिविशिष्टधूमादिरूपहेतुविषयिणी वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्यनुमितिर्भवति। नचान्यलिङ्गकानुमितौ व्यभिचारः? तत्तल्लिङ्गविषयतायाः कार्यतावच्छेदकत्वेनैव तद्वारणात्। न च गौरवम्? अव्यवहितोत्तरत्वस्यास्मिन् मते कार्यकारणभावेऽनिवेशेन लाघवानपायात्।

यद्यपि "लिङ्गोपधानमतेऽनुमितेस्सर्वत्रैव तादृशाकारकतये" त्यादिना हेत्वाभासनिरूपणे श्रीमता गदाधरभट्टाचार्येणाचार्यमतस्योपपादनं संक्षेपेणाभिहितम्, तथापि पूर्वपक्षोपन्यासपुरस्सरं विस्तरेण सिद्धान्तोपपादनमत्रैवपरिदृश्यते। ग्रन्थे चास्मिन् नव्यमतापेक्षया अनुमितिपरामर्शयोः कार्यकारणभावेयत्महत् वैलक्षण्यम् यच्चलिङ्गोपहितलैङ्गिकभानविषयकं विशिष्टयुक्तिजालंतत्सर्वं ग्रन्थावलोकनेनैव हृदयङ्गमो भविष्यतीति तार्किकाणां मनोविनोदाय समुपस्थापितोऽयं ग्रन्थः। ग्रन्थे चास्मिन् आरम्भे परिसमाप्तौवा ग्रन्थकर्त्तुः नामादिपरिचयो न परिलक्ष्यते, किन्तु अस्याध्ययनार्थं १८५०- वैक्रमाब्दे शिवरुद्रनामकपण्डितेनास्य प्रतिलिपिः कृतेत्येतावन्मात्रलेखः परिलक्षितो भवति।

२ द्वितीये नव्यमते अनुमितिं प्रति पर्वतीयधूमव्यापको वह्नि रित्याकारकपरामर्श एव हेतुः न तु व्याप्तिविशिष्टवह्निव्याप्यधूमवान् पर्वत इत्याकारकस्तस्य कारणत्वे कारणतावच्छेदककुक्षौ व्याप्तिघटकसामानाधिकरण्यविषयतानिवेशेन गौरवात्। एवम् पर्वतो वह्निसमानाधिकरणाभाववानित्याकारकौपनीतभानं शाब्दबोधादिकञ्च प्रति पर्वतादिपक्षक वह्न्याद्यनुमितिसामग्र्याप्रतिबन्धकत्वकल्पने न गौरवमिति चेत् अत्रोच्यते, व्यापकसामानाधिकरण्यरूप व्याप्तिविशिष्टहेतुमत्तापरामर्शस्य कारणता अस्माभिः स्वीक्रियते चेत्तदैव गौरवं स्यात्, किन्तु वयं साध्याभाववदवृत्तित्वविशिष्टहेतुमत्ताज्ञानत्वेनैव हेतुतां स्वीकुर्मः, न च तत्र गौरवंप्रत्युत लाघवमेव। न च केवलान्वयिन्यव्याप्तिः, तत्र साध्याभावाप्रसिद्धावपि अभावांशे साध्यीयत्वावगाहिनोभ्रमात्मकज्ञानादेवानुमितेः स्वीकारात्।

अन्वयव्याप्तिज्ञानवत् व्यतिरेकव्याप्तिज्ञानमप्यनुमितौ हेतुः, तत्रान्वयव्याप्तिज्ञानात् पर्वतो वह्निमानित्याकारकव्यतिरेक व्याप्तिज्ञानाच्च पर्वतो वह्न्यभावाभाववानित्याकारिका नुमितिर्जायते।

केचित्तु तथाविधोभयव्याप्तिज्ञानात् एकविधैवानुमितिर्जायत इति। मीमांसकानुयायिनस्तु व्यतिरेकव्याप्तिज्ञानात् अर्थापत्त्याख्यविलक्षणप्रमितिरेवोत्पद्यते नत्वनुमितिरित्यनया रीत्या नव्यप्राचीनमतयोः समालोचनां विधाय स्वमतस्थापनं कृतम्। ग्रन्थस्यास्य कर्त्ता तार्किकचक्रचूडामणिर्गदाधरभट्टाचार्यस्य गुरवः महामहोपाध्यायहरिरामभट्टाचार्याः।

अस्यैकादर्शपुस्तकान्तरमनातिशुद्धं कामेश्वरसिंहदरभंगा संस्कृतविश्वविद्यालयोपकुलपतिश्रीकुमारगङ्गानन्दसिंहमहोदयस्य कृपावशात् तत्रत्यपुस्तकालयाध्यक्षव्याकरणाचार्यश्रीजीवानन्दठाकुरद्वारासभासादितम्। अतः तेभ्यः धन्यवादानर्पयामः।

३ तृतीये ज्ञानद्वयकारणताविचारे पर्वतादिपक्षकवह्न्यादिसाध्यकधूमादिहेतुकपर्वतो वह्निमानित्याद्यनुमितिं प्रतिवह्न्यादि व्याप्यत्वावच्छिन्नधूमादिप्रकारता निरूपितपर्वतादि विशेष्यताशालिज्ञानत्व रूपविशिष्ट परामर्शत्वेन न कारणता गौरवात्, किन्तु व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन व्याप्यतावच्छेदकप्रकारकतद्धर्मताज्ञानत्वेन च कारणताद्वयम्, तथा च धूमो वह्निव्याप्यो धूमवान् पर्वत इत्याकारकज्ञानद्वयात् सर्वत्रानुमितिर्भवति न तु केवलविशिष्टपरामर्शादेवेति मीमांसकमतमनुद्यनैयायिकमतोपन्यास पुरस्सरं ग्रन्थसमाप्तिमकरोत्। अस्यकर्त्रादिपरिचयः ग्रन्थादौनास्ति।

४ चतुर्थे प्रतियोगिज्ञानकारणताविचारे प्रतियोगिज्ञानमभावप्रत्यक्षे कारणम् तत्र घटाभाव प्रत्यक्षेघटज्ञानं कारणमिति तत्तद्रूपेणैव कार्यकारणभावकल्पनम्।

प्रतियोगिज्ञानस्यकारणत्वे दोषमभिधाय प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य कारणत्वव्यवस्थापनंकृतम्।

तृतीयचतुर्थ पुस्तकस्यादर्शभूत पुस्तकान्तरं नोपलब्धम्।

५ पञ्चमस्यास्य लाघवगौरवरहस्यस्यनिर्माता कवितार्किकशिरोमणिरूपा ध्या-

योपनामकोमहामहोपाध्याय पदविभूषितो मिथिलामहीमण्डनोमण्डन इवत्र यीमथनकुशलोवाचस्पति रिवनिखिलदर्शनाचार्योविद्वद्वर्यो गोकुलनाथोनाम, यद्विषयेतदीयान्तेवासिनांमच ऊर्द्ध्वंषट् पुरूषेस्थितानामस्मत्पूर्वजानां, शिवप्रतिष्टाचिन्तामणिचन्द्रिका प्रेतविवाहपद्धति प्रभृतिविविधग्रन्थकर्तृणां महामहोपाध्यायपदविभूषितानामुपाध्यायोपनामक रामेश्वरझामहोदया-नांसिद्धपुरूषाणां प्रसिद्धयतिपद्यमदः—

मातर्गोकुलनाथनामकगुरोर्वाग्देवितुभ्यंनमः। पृच्छामोभवतीं महीतलखिदंस्यवक्त्वैवयदगच्छसि। भूलोकेवसतिः कृताममगुरोस्वर्गेतथागीष्पतौ पातालेफणिनायके भगवति? प्रौढ़िःकलव्याधिका॥ अयञ्चाधिनिमिजनपदं [मिथिलायां] मङ्गलवनी [मङ्गरौनी] समाख्याग्रामे फणदहनामके मैथिलब्राह्मणवंशे महामहोपाध्यायनिखिल दर्शननदीस्नात पीताम्बरादुमादेव्यांलब्धजन्माभीनगरे फत्तेसाहाभिधनृपवराणां राजधान्यांगुरूरिव निवसन् दर्शनेस्मृतौसाहित्येचवहुविधान् वादिवृन्दैरसमाधेयान् ग्रन्थाम्विरचितवान् यानद्यापिविद्वद्वराः सगौरवंपठन्तिपाठयन्तिच, अयञ्चसाधिकेषोडशशतात्मकेशालिवाहनशकाब्दे मिथिलामलङ्कुर्वन्नासीदितितदीय ,,मासमीमांसा,, ख्यग्रन्थादवसीयते।

एतन्निर्मिताअनेकेग्रन्थाः तत्रकतिचनात्र नामतोनिर्द्दिश्यन्ते,-न्यायसिद्धान्ततत्त्वम्, दीधितिविद्योतः। रश्मिचक्रम्, मिथ्यात्वनिर्वचनम्; पदवाक्यरत्नाकरः। दिक्काल निरूपणम्, कुसुमाञ्जलिविवरणम्, वौद्धाधिकारविवरणम्, शक्तिवादः मुक्तिविमर्शः, लाघवगौरवरहस्यम्, तर्कतत्त्वनिरूपणम्। रसमहार्णवः। काव्यप्रकाशविवरणम्, कादम्वरी, कुण्डकादम्वरी एकावलीवृत्ततरङ्गिणी, शुद्धिविवेकः, मांसमीमांसा। अशौचनिर्णयः, चिन्तामणिविवरणम्, शिवस्तुतिः, अमृतोदयनामनाटकञ्चेत्यादि।

अत्रचग्रन्थे लाघवगौरवज्ञानयोः प्रतिवध्यप्रतिवध्यकभावादिविचारः विस्तरेणोद्दिष्टः।

लाघवस्वरूपम् गौरवस्वरूपञ्च लक्षणतोऽभिधायेतद्भेदः सोदाहरणः प्रदर्शितः। स्वप्रकाशसाक्षिक प्राप्तौगौरवस्यविनिगम कत्वमपिविस्तरेणोपपादितम्।

अस्याप्येकं पुस्तकान्तरमशुद्धिवहुलं कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयोपकुलपतिमहोदयानांश्रीकुमारगङ्गानन्दसिंहमहानुभावानां कृपयातत्रत्यपुस्तकालयाध्यक्षेण पंश्रीजीवानन्दठाकुरद्वारासमधिगतम् । अन्येचकेवलपूज्यचरणानां श्रीनीलाम्बरझामहोदयानां संस्कृतसंग्रहालये आयुष्मतातत्पौत्रेणापि श्रीश्यामानन्दनाथझाद्वारा संरक्षितोऽयमासीत्तत एव तत्प्रवन्धेनप्रतिलिपिकरणेसमर्थोहम् अतस्तानाशिषा सम्वर्द्धयामि ।

६ षष्टेसिद्धि प्रतिवन्धकता रहस्ये च सिद्धेरनुमितिप्रति वन्धकत्वेपूर्वपक्षोपन्यासपूर्वकसिद्धान्तोप वर्णनं कृतमिति ।

प्रकाशन कार्यसम्पादकस्य पण्डित श्री शशिनाथशर्मण अनेकविधप्रवन्धेनास्यप ट्ग्रन्थरत्नस्यप्रकाशनम् सञ्जातमत स्तेभ्यः धन्यवादं वितरामि ।

तदत्रास्मादृशाल्पज्ञजनसुलभेनमतिदोषेण जनितानि स्खलितानि सुविमृश्य शोधयन्तु, प्रबोधयन्तुच विचक्षणवराः येनकृतज्ञता प्रकाशन पुरस्सरं येतेमहि द्वितीय संस्करणेऽस्य संशोधनाय । हन्ता रक्षगुणैकपक्ष पातिनोदूषणवाचंयमाः सुधियः शीशकाक्षर योजकदोषेणास्मदीयदृष्टि दोषेणचोपनताऽशुद्धिरितिनिश्चिन्वन्तोविरमामोविस्तरादिति शिवम् ।

विदुषामाश्रवो
झोपाख्य. श्री रूपनाथः

मिथिला संस्कृत शोधसंस्थानम्
महेशनगरम्
दरभङ्गा
नागपञ्चमी
१९—८—७०

## विषयानुक्रमणिका

# आचार्यमतरहस्यम् ।

वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् वह्निव्याप्तिविशिष्टधूमादिविषयिणी वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्यनुमितिरुत्पद्यत इत्याचार्याः । युज्यते चैतत् अनुमितेर्लिङ्गविषयत्वोपगमात् , अन्यलिङ्गकानुमितौ व्यभिचारस्य तत्तल्लिङ्गविषयताया जन्यतावच्छेदकत्वोपगमेनैव वारणसम्भवात्, परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वानिवेशात् ।

अथ वह्निव्याप्यधूमव्याप्यवान् वह्निव्याप्यालोकवांश्च पर्वत इत्यादिसमूहालम्बनपरामर्शजन्यालोकलिङ्गकानुमितावपि वह्निव्याप्यधूमादिविषयकत्वसत्त्वेन लिङ्गविषयताया जन्यतावच्छेदककोटिनिवेशनेप्यव्यवहितोत्तरत्वनिवेशनमावश्यकम् । ननु वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वं पर्वतत्वावच्छिन्नविशेष्याताकधूमादिपरामर्शजन्यतावच्छेदकम् , उक्तस्थले चालोकविशिष्टपर्वतत्वं वह्निविशेष्यतावच्छेदकम्, न तु धूमविशिष्टपर्वतत्वमतो न व्यभिचार इति चेत्, वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नेत्यस्यार्थो वाच्यः कीदृशः, यदि हि सामानाधिकरण्येन वह्निव्याप्यधूमविशिष्टं यत् पर्वतत्वं तदवच्छिन्नं तदर्थः, तदा आलोकविशिष्टपवर्तत्वावच्छिन्नविशेष्यतायामपि तथात्वात् अन्यलिङ्गकानुमितौ व्यभिचारो दुर्वारः । यदि च वह्निव्याप्यधूमावच्छिन्नपर्वतत्ववृत्त्यवच्छेदकताकत्वं तदर्थः, तदा वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारकानुमितेरेवासंग्रहप्रसङ्गः , तत्रानुमितौ धूमस्य पर्वतत्वांशेऽविशेषणतया पर्वतत्वनिष्ठविशेष्यतावच्छेदकतानवच्छेदकत्वात् , वह्निव्याप्यधूमावच्छिन्नत्वे सति पर्वतत्वावच्छिन्नस्य तदर्थत्वेपि एकत्र द्वयमिति रीत्या पर्वतविशेषणतापन्नतादृशधूमपर्वतत्वे विशेष्यतावच्छेदकीकृत्यालोकपरामर्शजनितायामनुमितौ व्यभिचारः , तादृशानुमितिविशेष्यताया अपि धूमपर्वतत्वाभ्यामवच्छिन्नत्वात्, पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमप्रकारताशालित्वस्याधिकनिवेशे तु यत्र तादृशानुतावेव पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमव्याप्यपरामर्शात् पर्वतत्वविशिष्टे धूमप्रकारतयाविषयीभूतस्तत्र व्यभिचारो दुर्वार एव इति चेत्-मैवम्, वह्निव्याप्यधूमप्रकारतानिरूपिता या पर्वतत्वावच्छिन्नविशेष्यता तादृशविशेष्यत्वाभिन्ना तादृशधूमपर्वतत्वोभयावच्छिन्नविशेष्यता तन्निरूपितवह्निविधेयतैव पर्वतत्वावच्छिन्नविशेष्यकधूमपरामर्शजन्यतावच्छेदिका, अतो न व्यभिचारः ।

वह्निव्याप्यधूमवह्न्युभयसाध्यकान्यलिङ्गकसमूहालम्बनानुमित्यादौ वह्निव्याप्यधूमप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताभिन्नाया एव विशेष्यताया वह्निविधेयतानिरूपकत्वात्, वह्निव्याप्यधूमवदन्यो न वह्निमानित्येताद्दशेतरबाधसहकृताऽऽलोकलिङ्गकपरामर्शजन्यानुमितौ वह्निव्याप्याऽऽलोकवान् वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्येताद्दशानुमितौ च पर्वतत्वस्य वह्निव्याप्यधूमप्रकारतानिरूपितविशेष्यतावच्छेदकत्वन्नोपेयते, किन्त्वेकत्र द्वयमिति रीत्या तदुभयस्य विशेषणत्वमतो न व्यभिचारः।

अथैवमपि ताद्दशानुमितावेकत्र द्वयमितिरीत्या धूमपर्वतत्वोभयधर्मितावच्छेदकाऽऽलोकलिङ्गकपरामर्शस्य परस्परव्यभिचार इति चेत्, नहि ताद्दशपरामर्शजन्यानुमित्यवैलक्षण्यंभवति यतस्ताद्दशानुमितौ आलोकरूपहेतोस्तद्धर्मितावच्छेदकं नोभयं किन्तु पर्वतत्वमेव। एकत्र द्वयमिति रीत्या धूमपर्वतत्वोभयधर्मितावच्छेदककाऽऽलोकलिङ्गकानुमितौ च धूमपर्वतत्वोभयमेवाऽऽलोकस्य धर्मितावच्छेदकमिति रीत्या वैलक्षण्यं भवति।

अथ ताद्दशेतरबाधजन्यानुमितौ धूमपर्वतत्वयोर्विशेषणविशेष्यतावच्छेदकभावविरहे तदुत्तरं पर्वतो वह्निमान्न वेति संशयापत्तिरिति चेत्, तदानीं संशयो न जायत इति केन निर्णीतम। अथ वह्निव्याप्यधूमवत्पर्वतान्यो न वह्निमानित्येताद्दशेतरबाधजन्यानुमितौ ताद्दशधूमपर्वतयोर्विशेषणविशेष्यतावच्छेदकभावोऽवश्यमेव स्वीकरणीयः, ताद्दशोभयविधेतरबाधजन्यानुमित्यवैलक्षण्येन; ताद्दशेतरबाधयोःपरस्परं व्यभिचारः। इत्थञ्च वह्निव्याप्यधूमवत्पर्वतान्यो न वह्निमानित्येताद्दशेतरबाधसहकृतालोकलिङ्गकपरामर्शजन्यानुमितौ वह्निव्याप्यधूमवत्पर्वत एताद्दशपरामर्शस्य व्यभिचार इति चेन्न। पर्वतत्वावच्छिन्नविशेष्यकधूमप्रकारकनिर्णयत्वेनैव वह्निव्याप्यधूमवान् पर्वत एताद्दशपरामर्शस्य हेतुता, न तु पर्वतत्वावच्छिन्नमुख्यविशेष्यकधूमवत्तानिश्चयत्वेन, मुख्यविशेष्यतानिवेशे प्रयोजनाभावात्। इत्थञ्च ताद्दशकारणतावच्छेदकावच्छिन्नायास्तथाविधेतरबाधबुद्धेस्तत्र सत्त्वान्न व्यभिचारः

अथ मुख्यविशेष्यत्वानिवेशे ताद्दशेतरबाधबुद्धिपरामर्शान्तरनिरपेक्षैवानुमितिं जनयत्विति चेत्, जनयत्येव का क्षतिः। अथैवं मुख्यविशेष्यत्वानिवेशे वह्निव्याप्यधूमवत्पर्वतव्याप्यवान् देश इत्यादिपरामर्शात् पर्वतो वह्निमान् देशो वह्निव्याप्यधूमवत्पर्वतवानित्याकारकद्विविधविषयताशालिन्यनुमित्युत्पादापत्तेरिति चेत्, केनावधारितस्तत्रानुमित्यनुत्पादः।

वस्तुतो वह्निव्याप्यधूमवान् पर्वतान्यो न वह्निमानित्येतादृशेतरबाधबुद्धीनां वह्निमद्भेदवह्न्यभावावगाहिजन्यानुमितावपि एकत्र द्वयमिति रीत्या धूमवत्पर्वतयोर्भानोपगमे क्षतिविरहः।

नचैवंपर्वतत्वावच्छिन्नविशेष्यकधूमपरामर्शजन्यानुमितौ तादृशेतरबाधस्य-व्यभिचारः, तादृशेतरबाधबुद्धीनां वह्निमद्भेदवह्न्यत्यन्ताभावावगाहितया नानाविधत्वेन परामर्शजन्यानुमितौ परस्परव्यभिचारवारणाय तत्राव्यवहितो-त्तरत्वनिवेशस्यावश्यकत्वात्, तत एव व्यभिचारवारणसम्भवात्।

अथ नीलपर्वतो वह्निव्याप्यधूमवान् इत्याकारकपरामर्शजन्याया एव वह्निव्याप्यधूमवान्नीलपर्वतो वह्निमानित्येतादृशानुमितेरपि वह्निव्याप्यधूमप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकतया शुद्धपर्वतत्वावच्छिन्नविशेष्य-कपरामर्शस्य व्यभिचारः। न च शुद्धपर्वतत्वावच्छिन्नविशेष्यकधूमपरामर्शत्वेन न हेतुता येन तत्र व्यभिचारः स्यात्, किन्तु पर्वतत्वावच्छिन्नविशेष्यकधूमपरा-मर्शत्वेन, तच्च नीलपर्वतत्वावच्छिन्नविशेष्यकपरामर्शसाधारणमिति वाच्यम्, नीलपर्वतो धूमाभाववान् पर्वतो वह्निव्याप्यधूमवानित्याकारकपरामर्शादनु-मित्युपपत्तये शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमाभावप्रकारताशून्यत्व-रूपनिश्चयत्वस्यैव तादृशपरामर्शहेतुतायां निवेशनीयतया धूमप्रकारतानिरूपित-विशेष्यताया अपि शुद्धपर्वतत्वावच्छिन्नत्वनिवेशस्यावश्यकत्वात्। अन्यथा नीलपर्वतो वह्निव्याप्यधूमवान्नवेति संशयादप्यनुमित्यापत्तिरिति चेत्—न, वह्निव्याप्यधूमप्रकारतानिरूपितशुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निविधे-यताया एव जन्यतावच्छेदकत्वोपगमेनैव व्यभिचारानवकाशात्।

अथ शुद्धपर्वतत्वावच्छिन्नत्वं यदि पर्वतत्वान्यधर्मानवच्छिन्नत्वं तच्च विधेयतानिरूपितवह्निव्याप्यधूमावच्छिन्नविशेष्यत्वाभिन्नाया वह्निव्याप्यधूम-वान पर्वतो वह्निमानित्येतादृशानुमितौ विशेष्यताया अपि न सम्भवति इति; चेन्न, तादृशज्ञानीयधूमप्रकारतानिरूपितविशेष्यताया वह्निविधेयतानिरूपितधूमावच्छि-न्नविशेष्यत्वाभिन्नत्वेपि तस्याः धूमावच्छिन्नविशेष्यतात्वेन न तादृशप्रकारतानि-रूपितत्वं किन्तु पर्वतत्वावच्छिन्नविशेष्यतात्वेनैव, एवञ्च पर्वतत्वान्यधर्मावच्छिन्न-विशेष्यतात्वरूपेण धूमप्रकारतानिरूपकं यद्यत्तदन्यत्वरूपस्य शुद्धपर्वतत्वच्छिन्न-त्वस्य निवेशेनानुपपत्त्यभावात्। न च धूमप्रकारतानिरूपितशुद्धपर्वतत्वा-वच्छिन्नविशेष्यतानिवेशे नीलपर्वतान्यो न वह्निमानित्येतादृशेतर-बाधसहकृतपरामर्शजन्याया धूमवन्नीलपर्वतोवह्निमानित्येतादृशानुमितेर-

संग्रहः। न च तत्र धूमप्रकारतानिरूपितविशेष्यताया नीलेनाप्यवच्छिन्नत्वादिति वाच्यम्, तत्र पर्वतत्वविशिष्टे एकत्र द्वयमिति रीत्या विशेषणतापन्नयोरेव धूमनीलयोर्विधेयतावच्छेदकत्वोपगमे नीलादेर्धूमधर्मितावाच्छेदकत्वविरहात्। न च धूमप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यतानिवेशात् वह्निव्याप्यधूमवान्नीलपर्वत इत्याकारकपरामर्शकाले नीलो वह्निव्याप्याभाववानित्येतादृशबाधसत्वे धूमवान् पर्वतो वह्निमानित्येतादृशानुमितिरेवोपपद्यत इति व्यभिचारो दुर्वार एवेति वाच्यम्, पर्वतो वह्निव्याप्याभाववानित्येतादृशबाधकाल इव तादृशबाधकालेपि तथाविधपरामर्शादनुमित्यनभ्युपगमात्। अथानुमितौ लिङ्गविषयताभ्युपगमेनैवान्यलिङ्गकानुमितौ व्यभिचारवारणसम्भवात् व्याप्तिविषयतायां मानाभावः। न च व्यापकसमानाधिकरण्याव्यभिचारितसाध्याभाववदवृत्तित्वादिनानाविधव्याप्त्यवगाहिपरामर्शजन्यतावच्छेदककोटौ तत्तद्व्याप्तिविषयकत्वनिवेशश्चावश्यकः, अन्यथा परस्परव्यभिचारप्रसङ्ग इत्यनुमितौ व्याप्तिविशिष्टधूमादिविषयतानिवेशनमावश्यकमिति वाच्यम्, लाघवादेकविधसाध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्यैवानुमितिहेतुत्वोपगमात्। न च साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्य साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानस्य वा हेतुत्वे विनिगमनाविरह इति वाच्यम्, साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानस्य हेतुत्वे कारणतावच्छेदकगौरवप्रसङ्गः, तथा हि अत्यन्ताभावघटितव्याप्तिज्ञानस्यहेतुतामते समवायेन वह्नित्वावच्छिन्नविषयकसंयोगसंसर्कानुमितिहेतुतायां समवायावच्छिन्नवह्नित्ववृत्त्यवच्छेदकतानिरूपकीभूता या संयोगसंसर्गावच्छिन्ना प्रकारतावच्छेदकतानिरूपकीभूता प्रतियोगितासंसर्गावच्छिन्नप्रकारता तन्निरूपितभेदविशेष्यतेति एकस्यावच्छेदकत्वांशस्य चाधिकनिवेशाद् गौरवमिति। न च भवन्मते अत्यन्ताभावविषयतानिरूपितप्रतियोगिप्रकारताया वास्तवसंयोगसंसर्गावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नत्वनिवेशे यत्र समवायावच्छिन्नत्वेनैव संयोगावच्छिन्नप्रतियोगिता व्याप्तिज्ञाने विषयीकृता तत्रापि संयोगसंसर्गकानुमित्यापत्तिरिति, संयोगीयसांसर्गिकविषयत्वावच्छिन्नाऽवच्छिन्नत्वसांसर्गिकविषयत्वावच्छिन्नप्रतियोगित्वसांसर्गिकविषयत्वावच्छिन्नत्वमेवेष्यतामित्यन्ताभावघटितव्याप्तिज्ञानहेतुतायामेव गौरवमिति वाच्यम्, एकसम्बन्धावच्छिन्नप्रतियोगिताया अपरसम्बन्धावच्छिन्नत्वेन संसर्गतया भाने मानाभावात्। अस्तु वा एतादृशरीत्या अत्यन्ताभावघटितव्याप्तिज्ञानहेतुत्वे गौरवादन्योन्याभावघटितव्याप्तिज्ञान-

मेव हेतुरिति न विनिगमनाविरहसंभवः। एतेन साध्याभाववदवृत्तित्वात्यन्ताभावतद्वदन्योन्याभावघटितव्याप्तिज्ञानयोर्हेतुत्वे विनिगमनाविरहोऽपि निरस्तः, तस्मात् एकविधव्याप्तिज्ञानस्यैव हेतुतया व्यभिचारविरहेण व्याप्तिविषयकत्वमनुमितौ निर्युक्तिकमेव।

न चानुमितौ व्याप्तिभानानभ्युपगमे धूमप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वमेव धूमपरामर्शजन्यतावच्छेदकं वाच्यम्, तथा च धूमवत्पर्वतपक्षकालोकलिङ्गकानुमितौ व्यभिचारः, तादृशानुमितावपि धूमप्रकारतानिरूपितशुद्धपर्वतत्वावच्छिन्नविशेष्यताकत्वादिति वाच्यम्,

धूमातिरिक्तत्वे सति पर्वतत्वातिरिक्तो यो धर्मस्तदनवच्छिन्नविशेष्यताकत्वनिवेशात्तादृशानुमितिविशेष्यतायाश्चाधिकेनालोकेनावच्छिन्नत्वान् व्यभिचारानवकाशात्। न च नीलपर्वतान्यो न वह्निमानित्येतादृशेतरबाधजन्यानुमितेरसङ्ग्रह इति वाच्यम्। तत्र धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यतातो नीलविशिष्टपर्वतत्वावच्छिन्नविशेष्यताया भिन्नत्वोपगमात्, धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताया नीलानवच्छिन्नत्वेनानुपपत्त्यभावात्।

वस्तुतस्तु धूमहेतुकस्थले पर्वतविशेषणतापन्नस्य धूमस्यैककालीनत्वसम्बन्धेन विधेयांशे विशेषणतया भानमभ्युपेयते, एवञ्च पर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेषणत्वाभिन्नवह्निनिष्ठविशेष्यतानिरूपितैककालीनत्वसम्बन्धावच्छिन्नधूमनिष्ठविशेषणताशालित्वमेव धूमपरामर्शजन्यतावच्छेदकं, धूमावच्छिन्नपक्षकालोकलिङ्गकस्थले एककालीनत्वसम्बन्धेन धूमस्य वह्न्यंशेऽप्रकारत्वमिति न व्यभिचारः। अत एव धूमविशिष्टपर्वतत्वावच्छिन्नपक्षकधूमपरामर्शजन्यानुमितेः धूमवान् पर्वतो वह्निमानित्याकारकायाः धूमातिरिक्तः सन् पर्वतातिरिक्तो यो धर्मस्तदनवच्छिन्नविशेष्यताकत्वेऽपि शुद्धपर्वतत्वावच्छिन्नविशेष्यकपरामर्शस्य न व्यभिचारः, तादृशानुमितौ धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपिताया धूमविशेषणताया एककालीनत्वसंसर्गावच्छिन्नविशेषणत्वाभिन्नतया शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेषणत्वाभिन्नवह्निनिष्ठविशेष्यानिरूपितैककालीनत्वसम्बन्धावच्छिन्नविशेषणतायास्तत्रासत्वात्। न च यत्र धूमविशिष्टपर्वतत्वावच्छिन्नपक्षकालोकलिङ्गकानुमितौ वह्नेरेककालीनत्वसम्बन्धेन धूमवत्त्वे लाघवमित्येतादृशलाघवज्ञानादेककालीनत्वसम्बन्धेन धूमस्य विशेषणत्वेन भानं तत्र व्यभिचार इति वाच्यम्,

तत्रैककालीनत्वसम्बन्धेन धूमस्य स्वातन्त्र्येण विशेषणतयैककालीनत्वसंसर्गावच्छिन्नविशेषणतायाः पर्वतत्वावच्छिन्नविशेष्यतानिरूपितविशेषणताभिन्नत्वेनोपदर्शितकार्यतावच्छेदकस्य तादृशानुमितिसाधारण्याभावात्। यत्तु, तेजोव्याप्यधूमवान् पर्वत इत्येतादृशपरामर्शकाले वह्निभिन्नतेजोभाववान् पर्वत इत्येतादृशेतरबाधबुद्धिस्तत्र धूमविशिष्टपर्वतत्त्वधर्मितावच्छेदकीकृत्य वह्नित्वेनैव वह्निः विधेयतया भासते तदुत्तरं पर्वतो वह्निमान्नवेति संशयानुत्पादात्, तदुक्तं व्यापकतानवच्छेदकमपि रूपं लाघवादिसहकारिवशादनुमितौ प्रकारीभवतीति। एवञ्च अनुमितौ व्याप्तिविषयत्वानभ्युपगमे तादृशानुमितौ वह्निव्याप्यधूमवत्ताज्ञानस्य व्यभिचार इति, तदप्यसत्, तादृशानुमितौ व्यापकतावच्छेदकीभूततेजस्त्वमपि भासते। अत एव पर्वतो न तेजस्वीति बाधकालेन तादृशपरामर्शजन्यानुमितिरिति। एवञ्च तेजस्त्वस्यैव विधेयतावच्छेदकत्वं न तु वह्नित्वस्य, विधेयांशे विशेषणतामात्रं भासते, तेनैव तदनन्तरं पर्वतो वह्निमान्नवेति संशयवारणसम्भवात्। एवञ्च वह्नित्वावच्छिन्नविधेयताया एव वह्नित्वावच्छिन्ननिरूपितव्याप्यत्वावगाहिपरामर्शजन्यतावच्छेदककोटौ निविष्टतया न व्यभिचार इति व्याप्तिविषयताभ्युपगमो निरर्थक एव। वस्तुतस्तु अत्रा वह्नितत्वस्य विधेयतावच्छेदकत्वेऽपि न व्यभिचारः, शुद्धवह्नित्वावच्छिन्नविधेयतायाः तथाविधपरामर्शजन्यतावच्छेदकत्वोपगमात्। उक्तस्थले च वह्नित्वविशिष्टतेजस्त्वस्यैव विधेयतावच्छेदकत्वात्, अत एव पर्वतो न तेजस्वीति बाधकाले न तादृशपरामर्शजन्यानुमितिः। यत्तु अनुमितौ व्याप्तिविषयत्वानभ्युपगमे शुद्धसंयोगघटितव्याप्त्यवगाह्यवच्छेदकावच्छेदेन हेतुमत्ताज्ञानेन जनितायामवच्छेदकावच्छेदेनानुमितावच्छिन्नसंयोगघटितव्याप्यवगाहिपरामर्शजन्यानुमितौ च तादृशहेतुमत्तापरामर्शस्य व्यभिचारः, उभयविधपरामर्शादेव भवन्मते एकविधाया अनुमितेरुत्पत्तेरिति तत्तत्व्याप्त्यवगाहिपरामर्शजन्यानुमितौ तत्तद्व्याप्तिविषयताभ्युपगम आवश्यकः। न चावच्छिन्नसंयोगघटितव्याप्तिज्ञानजन्यतावच्छेदककोटौ च शुद्धसंयोगसंसर्गावच्छिन्नहेतुप्रकारतायास्तत्र निवेशासम्भवात्, अवच्छेदकावच्छेदेन हेतुमत्ताविषयकशुद्धसंयोगघटितव्याप्त्यवगाहिपरामर्शजन्यतावच्छेदककोटौ चावच्छिन्नसंयोगसंसर्गावच्छिन्नहेतुप्रकारतायाः निवेशान्न व्यभिचार इति वाच्यम्, अवच्छिन्नसंयोगघटितव्याप्त्यवगाहिना अवच्छेदकावच्छेदेन हेतुमत्ताज्ञानात् पक्षतावच्छेदकावच्छेदेनानुमितेरुत्पत्तेः, शुद्धसंयोगसंसर्गावच्छिन्नहेतुप्रकारतायास्तत्रनिवेशासम्भवात्,

अवच्छेदकावच्छेदेन हेतुमत्तावगाहिशुद्धसंयोगघटितव्याप्तिविषयकपरामर्श-जन्यतावच्छेदककोटावनवच्छिन्नसंयोगसंसर्गावच्छिन्नहेतुप्रकारतानिवेशेपि तादृशानुमितौ व्यभिचारस्याशक्यवारणत्वात, तत्र शुद्धसंयोगेन हेतोः प्रकारत्वोपगमे तु अवच्छिन्नसंयोगेन व्याप्त्यवगाहिशुद्धसंयोगसंसर्गकहेतुमत्ताज्ञानजन्यानुमितावच्छेदकावच्छेदेन हेतुमत्तावगाहिना अवच्छेदकावच्छेदेन व्याप्त्य वगाहिपरामर्शस्य व्यभिचारात्, उभयसाधारणनिर्णयत्वस्याशक्यनिर्वचनतया अन्योन्यविषयप्रामाण्यज्ञानाभावनिवेशानुरोधेन च परामर्शयोर्भिन्नकारणताकल्पनमावश्यकमिति, तदप्यकिञ्चित्करम्, अवच्छिन्नसंयोगघटितव्याप्त्यवगाह्यवच्छेदकावच्छेदेन हेतुमत्ताज्ञानेनावच्छिन्नसंयोगेन हेतुसाध्योभयप्रकारिकाऽनुमितिर्जायते ; शुद्धसंयोगघटितव्याप्त्यगाह्यवच्छेदकावच्छेदेन तेन हेतुमत्ताज्ञानादवच्छिन्नसंयोगेन हेतुप्रकारिकाशुद्धसंयोगेन साध्यप्रकारिकाऽनुमित्यभ्युपगमेन परस्परवैलक्षण्यसम्भवात् । अथैवं शुद्धसंयोगेन व्याप्त्यवगाह्यवच्छेदकाच्छेदेन हेतुमत्ताज्ञानादवच्छेदकावच्छेदेनानुमितिरुत्पद्यत इत्येतादृशमतत्यागः, तत्र तादृशानुमितिस्तु पक्षतावच्छेदकावच्छेदेनानुमितिः, पक्षतावच्छेदकावच्छेदेन संयोगेन साध्याप्रकारकत्वादिति चेन्न; साध्यांशे साध्यसंसर्गांशे वा पक्षतावच्छेदकावच्छिन्नत्वावगाह्यनुमितेः पक्षतावच्छेदकावच्छेदेनानुमितित्वात । तथा च तादृशपरामर्शजन्यानुमितौ पक्षविशेषतापन्नस्य पक्षतावच्छेदकस्य विधेयांशे व्यापकतासंसर्गेण विशेषणत्वाभ्युपगमात तस्यापिसाध्यांशे पक्षतावच्छेदकावच्छिन्नत्वावगाहित्वेन संसर्गांशे पक्षतावच्छेदकावच्छिन्नत्वानवगाहिनोपि तथात्वमक्षतमेव ।

अथ वा अवच्छेदकावच्छेदेन हेतुमत्तावगाह्यवच्छिन्नसंयोगघटितव्याप्त्यवगाहिपरामर्शजन्यानुमितौ पक्षतावच्छेकावच्छिन्नत्वविशिष्टसंयोग एव पक्षतावच्छेदकावच्छिन्नत्वं भासते, शुद्धसंयोगघटितव्याप्त्यवगाह्यवच्छेदकावच्छेदेन हेतुमत्ताज्ञानजन्यानुमितौ शुद्धसंयोग एव पक्षतावच्छेदकावच्छिन्नत्वं भासते; यद्रूपावच्छिन्नस्य सम्बन्धस्य व्याप्तिघटकता तद्रूपावच्छिन्नत्वे शुद्धसंयोग एव पक्षतावच्छेदकावच्छिन्नत्वभानात । एवञ्च तादृशानुमितौ पक्षतावच्छेदकावच्छिन्नत्वस्य द्विधा भानम्, अवच्छेदकावच्छेदेन हेतुमत्तावगाहिशुद्धसंयोगघटितव्याप्त्यवगाहिपरामर्शजन्यानुमितौ शुद्धसंयोग एव पक्षतावच्छेदकावच्छिन्नत्वं भासते अतस्तत्रैकदैव भानमिति तादृशानुमितेर्वैलक्ष-

एयसम्भवेन न व्यभिचार इति चेत्, मैवम्, अनुमितौ व्याप्तिविषयताभ्युपमे वह्निव्याप्यधूमवत्पर्वतान्यो न वह्निमानित्येतादृशेतरबाधबुद्धेर्वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकानुमितौ स्वातन्त्र्येण हेतुता न कल्प्यते, तादृशेतरबाधबुद्धिदशायां पर्वतत्वावच्छिन्नविशेष्यकधूमपरामर्शस्यावश्यकत्वात् तत एव व्याप्तिविशिष्टधूमस्य विशेष्यतावच्छेदकतया भानोपपत्तेः। भवन्मते तु तादृशेतरबाधदशायां वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारिकाया व्याप्तिविषयिण्या अनुमितेरुत्पत्तये तद्धेतुत्वकल्पनमावश्यकम्। एवमनुमितौ व्याप्तिविषयताभ्युपगमे वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यधूमवत्ताज्ञानस्यावश्यकत्वात् तत एव वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकानुमित्युपपत्तेः। भवन्मते तु तादृशपरामर्शकाले सर्वजनसिद्धायास्तादृशविशिष्टधर्मावच्छिन्नविशेष्यकानुमितेरुत्पत्तये तद्धेतुत्वकल्पनमावश्यकमेव। न च भवन्मते तत्र वह्निव्याप्यधूमवान पर्वतो वह्निमानित्यकारिकाया शुद्धपर्वतत्वावच्छिन्नविशेष्यकपरामर्शजन्यानुमितिविलक्षणाया एवानुमितेरुत्पत्त्या तादृशपरामर्शादीनां हेतुत्वकल्पनमावश्यकमिति वाच्यम्। तत्र तादृशविलक्षणानुमितेरनभ्युपगमे क्षतिविरहात्।

वस्तुतस्तु अनुमितौ व्याप्तिविषयकत्वाभ्युपगमे वह्निव्याप्याभाववान पर्वतो घटवान् इत्यादिविशिष्टवैशिष्ट्यबोधे पर्वतत्वावच्छिन्नपक्षकवह्न्यनुमितिसामग्र्याः प्रतिबन्धकता न कल्प्यते तादृशसामग्रीकाले वह्निव्याप्याभाववान पर्वत इत्याद्याकारकविशेष्यतावच्छेदकनिर्णयरूपकारणविरहेणैव तादृशविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादीनामापत्त्यभावात्, तादृशनिर्णयसत्त्वे चानुमितेरनुदये तथा विधप्रत्यक्षादीनामिष्टत्वात्। भवन्मते च यत्र वह्निव्याप्याभाववान् पर्वत इत्याकारकज्ञानात् वह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शस्तदुत्तरं धूमवान पर्वतो वह्निमानित्याकारकानुमितेरुत्पत्तौ बाधकाभावेन तदानीं तादृशप्रत्यक्षानुदयात्तत्प्रतिबन्धकत्वकल्पनमावश्यकमेव।

न च वह्निव्याप्याभाववान् पर्वत इति ज्ञानानन्तरं वह्निव्याप्यधूमवान् पर्वत इत्येतादृशज्ञानमेव भवितुन्नार्हति, तत्प्रतिबन्धकीभूतबाधबुद्धिसत्त्वादिति वाच्यं, यत्र भाविज्ञानमप्रमेत्यप्रामाण्यग्रहानन्तरं वह्निव्याप्याभाववान पर्वत इत्येतादृशज्ञानं तदनन्तरं वह्निव्याप्यधूमवान् पर्वत इत्येतादृशज्ञानो

त्पत्तिसम्भवात्। केचित्तु अनुमितौ व्याप्तिविषयताभ्युपगमेऽनुमितिं प्रति परामर्शस्य पृथक् कारणता न कल्प्यते, वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्येतादृशविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिसाधारणवह्निव्याप्यधूमविशिष्टपर्वतत्वाद्यवच्छिन्नविशेष्यताकज्ञानत्वावच्छिन्नंप्रति विशेष्यतावच्छेदकनिर्णयविधया पर्वतत्वावच्छिन्नविशेष्यताकवह्निव्याप्यधूमादिमत्तानिश्चयत्वेन हेतुतायाः क्लृप्ततया तत एवोपपत्तेः, अनुमितौ व्याप्तिविषयत्वानभ्युपगमे तु धूमवान् पर्वत इत्यादिधर्मितावच्छेदकप्रकारकनिर्णयत्वेनैव परामर्शस्य धूमवत्पर्वतो वह्निमानित्येतादृशविशिष्टवैशिष्ट्यबोधं प्रति हेतुत्वात्तादृशज्ञानस्य परामर्शत्वाभावात् अनुमितौ परामर्शस्य पृथक् कारणता कल्पनमावश्यकम्।

अथ प्रत्यक्षादिसाधारणधर्मितावच्छेदप्रकारकनिर्णयहेतुतया निर्वाहे वह्निव्याप्यधूमवत्तानिश्चयदशायां वह्निव्याप्यधूमवान् पर्वतो घटवानित्याकारकघटादिविषयकप्रत्यक्षवत्तादृशानुमितेरप्यापत्तिः, न चापादकाभावः, घटादिविषयकपर्वतो घटवानिति सिद्ध्यभावस्यैवापादकत्वात्। न च तादृशसिद्ध्यभावस्य पर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वावच्छिन्नं प्रत्येव जनकतया वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकघटानुमितित्वावच्छिन्नापादकत्वासम्भव इति वाच्यं। तादृशविशिष्टधर्मावच्छिन्नविशेष्यताकघटादिनिर्णयाभावस्य तादृशविशिष्टधर्मावच्छिन्न विशेष्यताकघटानुमितिं प्रति जनकतया तद्बलादेव तादृशानुमित्यापत्तिसम्भवादिति चेन्न, घटादिप्रकारकसिद्ध्यभावकार्यतावच्छेदकाक्रान्तानां निखिलानुमितीनां घटव्याप्यावच्छिन्नविशेष्यताकत्वेन तादृशसिद्ध्यभावस्य फलजनने, घटव्याप्यवत्तानिर्णयस्य व्यापकधर्मावच्छिन्नसामग्रीमुद्रया सहकारित्वात् तादृशनिर्णयं विना तज्जन्यतावच्छेदकावच्छिन्नापत्त्यभावात्।

एतेन संयोगादिघटितव्याप्तिज्ञानादिदशायां समवायादिसम्बन्धावच्छिन्नवह्न्यादिविषयकप्रत्यक्षवत् तादृशानुमितेरापत्तिरिति तत्संसर्गकानुमितौ तत्संसर्गघटितव्याप्त्यवगाहिपरामर्शत्वेन हेतुताकल्पनमावश्यकमित्यपिनाशङ्कनीयम्; तत्संसर्गघटितव्याप्यत्वावच्छिन्नविशेष्यतावच्छेदकताशून्यतत्संसर्गत्संसर्गकानुमितेरलीकत्वेन निखिलानामेव तादृशानुमितीनां तत्संसर्गघटितव्याप्यत्वावगाहिविशेष्यतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकाक्रान्ततया तादृशनिर्णयं विना सिद्ध्यभावादिबलादापत्त्यभावात्। एवं शुद्धसंयोग-

घटितव्याप्यत्वावगाहिशुद्धसंयोगसंसर्गकहेतुमत्ताज्ञानदशायामवच्छेदकावच्छेदेन वह्न्यादिविषयकप्रत्यक्षवत्तादृशानुमितेरापत्तिवारणायावच्छेदकावच्छेदेनानुमितौ अवच्छेदकावच्छेदेन हेतुमत्तापरामर्शस्य हेतुत्वकल्पनमावश्यकम् इत्यपि न शङ्कनीयम, तथा ह्यवच्छेदकावच्छेदेनानुमितिर्द्विविधा पक्षतावच्छेदकावच्छिन्नसंयोगघटितव्याप्यत्वावच्छिन्नविशेष्यतावच्छेदकताकाऽवच्छिन्नसंयोगादि-संसर्गावच्छिन्न-व्याप्यनिष्ठविशेष्यतावच्छेदकताका च, तत्राववच्छिन्नसंयोगघटितव्याप्यत्वावच्छिन्नविशेष्यतावच्छेदकताकानुमितेस्तादृशव्याप्यत्वरूपविशेष्यतावच्छेदकतावच्छेदकावच्छिन्नविशेष्यतावच्छेदकप्रकारताकनिर्णयजन्यतावच्छेदकाक्रान्ततया तादृशनिर्णयं विना आपत्तेरसम्भवः, अवच्छिन्नसंयोगादिसंसर्गावच्छिन्नव्याप्यनिष्ठविशेष्यतावच्छेदकताकानुमितेरप्यवच्छिन्नसंयोगादिसंसर्गावच्छिन्नव्याप्यप्रकारताशालिविशेष्यतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकाक्रान्ततया तादृशनिर्णयं विना नापत्तिरिति ।

न चावच्छिन्नसंयोगादिसंसर्गावच्छिन्नव्याप्यनिष्ठविशेष्यतावच्छेदकताकविशिष्टवैशिष्ट्यबोधे तादृशसंसर्गावच्छिन्नविशेष्यतावच्छेदकप्रकारकनिर्णयत्वेन हेतुतायाः प्रामाणिकत्वे एव तादृशनिर्णयं विना आपत्तिर्न सम्भवति, तदेव न संयोगादिसंसर्गावच्छिन्नविशेष्यतावच्छेदकताकबोधे संयोगादिसंसर्गकविशेष्यतावच्छेदकप्रकारकनिर्णयत्वेन हेतुत्वकल्पनादेवापत्तिरिति वाच्यम् । शुद्धसंयोगादिना धूमवत्तानिर्णयदशायामवच्छिन्नसंयोगादिसं॰र्गकनिर्णयं विना तादृशसंसर्गावच्छिन्नविशेष्यतावच्छेदकताकप्रत्यक्षादेरप्यनुदयात्तादृशकारणताया अपि प्रामाणिकत्वात् ।

अन्योन्यविधाप्रामाण्यज्ञानाभावादिनिवेशानुरोधेनाप्यवच्छिन्नसंयोगादिसंसर्गकत्वनिर्णयशुद्धसंयोगादिसंसर्गकत्वनिर्णययोः पृथक्कारणताया आवश्यकत्वाच्च । उभयसाधारणसंयोगादिसंसर्गकनिर्णयत्वेन हेतुत्वे अवच्छेदकावच्छेदेन व्याप्यवत्ताज्ञानमप्रमा शुद्धसंयोगसंसर्गकज्ञानमप्रमेत्याकारकद्विविधाप्रामाण्यग्रहयोरभावस्यैकत्र निवेशनीयतया एकविधाप्रमाण्यग्रहदशायामन्यविधनिर्णयाद्विशिष्टवैशिष्ट्यबोधानुदयप्रसङ्गात ।

यत्तु एकपर्वतविशेष्यकवह्निव्याप्यधूमवत्तानिर्णयसत्त्वे वह्निव्याधूमविशिष्टपर्वतत्वावच्छिन्नपर्वतान्तरविशेष्यताकप्रत्यक्षोत्पत्त्या धर्मिविशेष्य-

सन्निवेश्यैव विशिष्टवैशिष्ट्यबोधस्थले विशेष्यतावच्छेदकप्रकारकनिर्णयस्य हेतुता कल्प्यते, एवञ्चैकपर्वतविशेष्यकपरामर्शात् पर्वतान्तरविशेष्यकानुमितेर्वारणाय तत्पर्वतविशेष्यकानुमितिं प्रति तत्पर्वतविशेष्यकपरामर्शत्वेन पृथक् कारणताकल्पनमावश्यकमिति तदप्यकिञ्चित्करम्, एकपर्वतविशेष्यकधूमवत्तानिर्णयजन्यप्रत्यक्षीयपर्वतान्तरविशेष्यताया वह्निव्याप्यधूमावच्छिन्नत्वानभ्युपगतिविरहेण प्रत्यक्षादिसाधारणकार्यकारणभावे धर्मिविशेषनिवेशस्यौचित्यात् ।

यत्तु परामर्शस्य पृथक् कारणत्वाकल्पनेऽनुमितौ विधेयभासकाभावः विशिष्टवैशिष्ट्यबोधस्थलीयकार्यकारणभावे विधेयविषयतायाः कार्यतावच्छेदककोटावनिवेशेन विशेष्यतावच्छेदकप्रकारकनिर्णयस्य विधेयभासकत्वासम्भवादिति । तन्न, सिद्ध्यभावादीनामेव विधेयभासकत्वसम्भवात्, सिद्ध्यभाव जन्यतावच्छेदककोटौ विधेयविषयत्वानिवेशेऽन्यसाध्यकानुमितौ व्यभिचारेण तत्र तन्निवेशस्यावश्यकत्वादित्याहुः । तच्चिन्त्यं, विशिष्टवैशिष्ट्यबोधत्वस्य तादृशानुभवत्वस्य च नित्यसाधारण्येन विशेष्यतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकत्वासम्भवेन विशिष्टवैशिष्ट्यावगाहिविजातीयप्रत्यक्षत्वस्यैव जन्यतावच्छेदकत्वोपगमात्, अनुमितेस्तदनाक्रान्ततया अनुमितित्वं कार्यतावच्छेदककोटौ निवेश्य वह्निव्याप्यधूमवत्तानिर्णयादीनां हेतुत्वान्तरकल्पनाया आवश्यकत्वात् ।

अथेश्वरज्ञाने विशिष्टधर्मावच्छिन्नविशेष्यताकत्वानभ्युपगमे क्षतिविरहात् वह्निव्याप्यधूमविशिष्टपर्वतत्वाद्यवच्छिन्नविशेष्यताज्ञानत्वरूपस्य विशिष्टवैशिष्ट्यबोधस्य न नित्यसाधारण्यमिति चेत्, मास्तु तादृशधर्मस्य नित्यसाधारण्यम्, तथापि तादृशधर्मस्य जन्यतावच्छेदकत्वे विशेष्यतावच्छेदकप्रकारकनिर्णयस्य पर्वतत्वमहानसत्वाद्यनन्तधर्मिताच्वच्छेदकभेदेन कार्यकारणभावबाहुल्यात् गौरवम् । न च तादृशधर्मविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकविजातीयप्रत्यक्षत्वावच्छिन्नं प्रति तादृशज्ञानस्य हेतुत्वेऽपि तद्भेदेन कारणताबाहुल्यात्साम्यमिति वाच्यम्, मन्मते विशिष्टधर्मावच्छिन्नविशिष्यताकत्वं जन्यतावच्छेदककोटावनिवेश्य वह्निव्याप्यधूमावच्छिन्नविशेष्यत्वाभिन्नवह्निव्याप्यधमप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन विजातीयप्रत्यक्षत्वावच्छिन्नं प्रति बह्निव्याप्यधूमप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्ब-

न्धेन निर्णयत्वेन हेतुतायाः कल्पनात्, विशेष्यतावच्छेदकभेदेन कारणताबाहुल्यविरहादुपदर्शितविशेष्यतावच्छेदकनिष्ठप्रत्यासत्त्या। शुद्धज्ञानत्वावच्छिन्नं प्रति तन्निश्चयत्वेन हेतुत्वं न सम्भवति शुद्धज्ञानत्वस्य नित्यसाधारण्येन जन्यतावच्छेदकत्वासम्भवात्। न च भवन्मतेऽनुमितौ परामर्शस्य धर्मितावच्छेदकभेदेन कारणत्वभेदस्यावश्यकत्वात् लाघवानवकाश इति वाच्यं, तत्रापि धर्मितावच्छेदकमनिवेश्य धर्मितावच्छेदकनिष्ठप्रत्यासत्त्या एव हेतुत्वोपगमेन तद्भेदेन कारणताबाहुल्याभावादिति, तस्मात् व्याप्तिविषयतायां पूर्वयुक्तिरेव साधीयसी।

अथ लिङ्गोपधानमते पर्वतो वह्निमानित्याकारकसिद्ध्यभावस्य कीदृशधर्मो जन्यतावच्छेदकः? न तावत् पर्वतत्वावच्छिन्नविशेष्यकवह्निविधेयकानुमितित्वरूपः, नीलपर्वतत्वावच्छिन्नविशेष्यताकानुमितेरपि तदाक्रान्तत्वेन व्यभिचारः। शुद्धपर्वतत्वावच्छिन्नविशेष्यताकानुमितेरेतन्मतेऽप्रसिद्धत्वेन तादृशविशेष्यताया निवेशासम्भवात्। न च वह्निव्याप्यातिरिक्तं सत् पर्वतत्वातिरिक्तो यो धर्मस्तदनवच्छिन्नविशेष्यताकवह्न्यनुमितित्वस्य नीलपर्वतत्वावच्छिन्नपक्षकानुमितिव्यावृत्तस्य जन्यतावच्छेदकत्वान्न व्यभिचार इति वाच्यम्, एवमपि वह्निव्याप्यधूमवत्पर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यालोकवानित्याकारकपरामर्शजन्यायां वह्निव्याप्यालोकवान् वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारकानुमितौ व्यभिचारस्य दुर्वारत्वात्, तादृशानुमितिविशेष्यतायाः वह्निव्याप्यपर्वतत्वातिरिक्तत्वेन धर्मेणानवच्छिन्नत्वात्, वह्निव्याप्यधूमवत्पर्वतत्वान्यधर्मानवच्छिन्नविशेष्यताकानुमितित्ववह्निव्याप्यालोकपर्वतत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताकानुमितित्वनानाधर्माणां पर्वतत्वावच्छिन्नविशेष्यताकैकसिद्ध्यभावजन्यतावच्छेदकत्वोपगमेन तादृशानुमितौ व्यभिचारवारणेऽपि वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकधूमलिङ्गकानुमितौ व्यभिचारो दुर्वार एव, तत्र धूमादेर्द्विधाभानेऽपि धूमपर्वतत्वान्यधर्मावच्छिन्नविशेष्यताकानुमितित्वरूपकार्यतावच्छेदकस्याक्रान्तत्वादिति।

अत्रोच्यते, शुद्धपर्वतत्वावच्छिन्नविशेष्यकधूमादिलिङ्गकपरामर्शजन्यानुमितौविशेष्यताया धूमादिविशिष्टपर्वतत्वावच्छिन्नत्वे उद्देश्यत्वाख्यविषयता शुद्धपर्वतत्वावच्छिन्नैव उद्देश्यत्वविशेष्यत्वयोः विधेयत्वप्रकारत्वयोश्च भेदस्यान्यत्र व्यवस्थापितत्वात्। तथा च पर्वतो वह्निमानित्येतादृशसिद्ध्य-

भावजन्यतावच्छेदकं शुद्धपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितवह्निविधेयताकानुमितित्वमेवेति न कश्चिद्दोषः। लिङ्गोपधानमते पर्वतो वह्निमानित्याकारकसिद्धेरनुमितिप्रतिबन्धकत्वमेव न कल्प्यते, तादृशसिद्धिकाले वह्निव्याप्यधूमवान् पर्वत इत्याकारकपरामर्शात् वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारिकाया अधिकविषयिण्या अनुमितेरभ्युपगमेऽपि क्षतिविरहात्। किन्तु वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्याकारकसिद्धीनामेव तथात्वमिति कश्चित्। अथ लिङ्गोपधानमते वह्निव्याप्यधूमवान् पर्वत इत्यादिपरामर्शकाले भिन्नेन्द्रियजन्यधूमाभाववान् पर्वत इत्याकारकहेतुज्ञानप्रतिबन्धकसत्त्वेऽनुमित्यनुदयप्रसङ्गः।

यस्तु तादृशपरामर्शजन्यानुमितौ पर्वतत्वादिरूपपक्षतावच्छेदकस्य धूमादिधर्मितावच्छेदकत्वं नाभ्युपेयते किन्त्वेकत्र द्वयमिति रीत्या पक्षविशेषणतापन्नधूमपर्वतत्वाद्युभयस्य वह्न्यादिरूपविधेयधर्मितावच्छेदकत्वम्। इत्थञ्च तादृशानुमितेर्धूमांशे निर्धर्मितावच्छेदकतया न तथाविधबाधकालेऽनुमित्यपलापापत्तिः; न च तथापि व्याप्त्यंशे तद्घटकीभूतपदार्थांशे च बाधकालेऽनुमित्यनुपपत्तिरस्त्येवेति वाच्यम्, व्याप्तिविषयतया अनभ्युपगमादिति तन्न, एवमपि धूमादिकं धर्मितावच्छेदकीकृत्य वह्न्यादेर्बाधकालेऽनुपपत्तितादवस्थ्यात्। न च धूमसामानाधिकरण्यमात्रेण। वह्न्यभावादिनिश्चयकाले तत्सामानाधिकरण्यमात्रेण वह्न्यादिप्रकारकानुमितौ, बाधकाभावात् तदवच्छेदेन बाधकाले पर्वतत्वं धर्मितावच्छेदकीकृत्य साध्याभाववावच्छेदकीभूतधूमवत्ताज्ञानसत्त्वेन लिङ्गानुपधानमतेऽप्यनुमितेरनुदयान्न दोष इति वाच्यं, धूमवत्त्वावच्छेदेन वह्न्यभाववत्ताज्ञानकालीनस्य पर्वतत्वसामानाधिकरण्यमात्रेण वह्निबुद्धिं प्रति विरोधित्वाभावात्; तादृशवह्न्यभाववत्ताज्ञानकाले सामानाधिकरण्यमात्रावगाहिपरामर्शात् लिङ्गानुपधानमतेऽनुमित्युदयात्, लिङ्गोपधानमते तत्रानुमित्यनुपपत्तितादवस्थ्यात्। धूमत्वावच्छेदेन बाधसत्त्वात्तदवच्छेदेन तत्सामानाधिकरण्यमात्रेण च वह्न्यनुमितेरसम्भवात्। एवं पर्वतो वह्निव्याप्यधूमाभाववान् इति प्रथमोक्तं बाधस्याप्रतिबन्धकत्वार्थं यदुक्तमेकत्र द्वयमिति रीत्या हेतुपक्षतावच्छेदकयोरनुमितौ मानाभ्युपगम इति तदपि न, एकत्र द्वयमिति रीत्या धूमपर्वतत्वोभयपक्षतावच्छेदकालोकपरामर्शजन्यानुमितौ पर्वतत्वावच्छिन्नपक्षकधूमपरामर्शस्य व्यभिचारप्रसङ्गात्। न च वह्निव्याप्यधूमपर्वतत्वान्यधर्मानवच्छिन्नविशेष्यतायाः कार्यता-

वच्छेदकत्वान्न व्यभिचार इति, तादृशानुमितिविशेष्यताया अधिकेनालोकेनाप्यवच्छिन्नत्वादिति वाच्यम्। एवमपि विशिष्टपर्वतत्वमेकत्र द्वयमिति रीत्या वा तदुभयधर्मितावच्छेदकीकृत्य वह्निव्याप्यधूमवत्ताज्ञानजनिताया एवानुमितौ शुद्धपर्वतत्वावच्छिन्नविशेष्यकधूमपरामर्शस्य व्यभिचारप्रसङ्गस्य दुर्वारत्वात्, तादृशानुमितौ विशेष्यतायां वा धूमपर्वतत्वाभ्यामेवावच्छिन्नत्वात्, तस्मात् पर्वतत्वविशिष्टविशेषणतापन्नस्य धूमस्य वह्नेर्द्ध मितावच्छेदकत्वमुपगन्तव्यमिति तादृशबाधकालेऽप्येवानुमित्यनुपपत्तिरिति चेत्, न, तादृशबाधदशायामनुमितेर्विवादग्रस्ततया लाघवानुरोधेन तत्र तस्यापलपनीयत्वात्, तस्मात् लिङ्गोपधानमते बाधकाभावः, बाधकञ्च परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वाद्यनिवेशप्रयुक्तलाघवमिति वदन्ति।

अत्र ब्रूमः वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकानुमितित्वावच्छेदेन पर्वतत्वावच्छिन्नविशेष्यताकवह्निव्याप्यधूमवत्तानिश्चयजन्यत्वकल्पनापेक्षया स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन तादृशनिश्चयविशिष्टत्वावच्छेदेन तज्जन्यत्वकल्पनमेवोचितम्। तथा सति विभिन्नविषयकशाब्दबोधादिकं प्रति वह्न्यभावाद्यनुमितिसामग्रीप्रतिबन्धकतायां तादृशानुमितिप्रतिबन्धकीभूतवह्निव्याप्यवत्तानिश्चयादीनामवश्यानिवेशेन लाघवसम्भवात्। न च तदनिवेशे वह्निव्याप्यवत्तानिश्चयदशायां वह्न्यभावानुमितेरितरसकलभिन्नविषयकशाब्दानुत्पादप्रसङ्ग इति वाच्यम्। तादृशनिश्चयविशिष्टान्यज्ञानस्यैव तादृशसामग्रीप्रतिबध्यत्वात्। भवन्मते व्याप्यवत्तानिश्चयत्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन हेतुताया क्लृप्तत्वात्, तादृशानुमितिसामग्रीदशायां तथाविधनिश्चयसत्त्वात्, तादृशनिश्चयविशिष्टज्ञानापरसम्भवात्। भवन्मते तु तादृशनिश्चयविशिष्टान्यत्वस्य सामग्रीप्रतिबध्यतावच्छेदकत्वे तादृशसामग्रीदशायां तथाविधनिश्चयविशिष्टज्ञानापत्तिरस्तीति तादृशनिश्चयाभाव एव सामग्रीमध्ये निवेशनीय इति तादृशसामग्रीघटकबाधाभावसिद्ध्यभावपरामर्शादिभिः साकं तस्य विशेष्यविशेषणभावेन विनिगमनाविरहात् कार्यकारणभावबाहुल्यप्रसङ्गः।

वस्तुतो व्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशनमावश्यकम्, तथा हि वह्निव्याप्यधूमप्रकारतानिरूपितशुद्धपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वादिनैव पर्वतो वह्निव्याप्यधूमवान् इत्यादिपरामर्शस्य हेतुता वाच्या। एवञ्च नीलपर्वतो वह्निव्याप्यधूमवानित्यादिनिश्च-

यजन्यायां नीलादिबाधकालीनानुमितौ व्यभिचारः। न च तदाऽनुमितिर्नोत्पद्यत इति प्रागुक्तं युक्तम्, तादृशस्थलेऽनुमित्यनभ्युपगन्तृमते शुद्धपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यधूमवन्नीलपर्वतत्वावच्छिन्नघटितहेतुकानन्तपरामर्शस्य शुद्धपर्वतत्वावच्छिन्नपक्षकवह्न्यनुमितित्वावच्छिन्नं प्रति हेतुत्वकल्पनाधिक्यप्रसङ्गात्। अस्मन्मते नीलपर्वतत्वावच्छिन्नविशेष्यकपरामर्शस्यावश्यकत्वात् तत एव शुद्धपर्वतत्वावच्छिन्नपक्षकानुमित्युपपत्तेः, तादृशपरामर्शानां हेतुत्वान्तराकल्पनात्।

न च तत्रास्माभिर्नीलपर्वतत्वावच्छिन्नपक्षकानुमितिरुपगन्तव्या न तु शुद्धपर्वतत्वावच्छिन्नपक्षकानुमितिरित्यस्माकमपि न तादृशपरामर्शानां तादृशानुमितिहेतुत्वमिति वाच्यम्। तत्रैव नीलपर्वतो न वह्निमानित्यादिबाधकाले नीलपर्वतो वह्निमानित्यनुमितेरसम्भवात् तादृशपरामर्शात् शुद्धपर्वतत्वावच्छिन्नपक्षकानुमितिस्वीकारस्य तत्रावश्यकत्वात्।

एवमेतन्मतेऽपि तादृशपरामर्शघटितशुद्धपर्वतत्वावच्छिन्नपक्षकानुमितिसामग्रीणां विभिन्नविषयकप्रत्यक्षप्रतिबन्धकत्वकल्पनमधिकं वाच्यम्। तत्र नीलपर्वतत्वावच्छिन्नपक्षकधूमपरामर्शघटितशुद्धपर्वतत्वावच्छिन्नपक्षकैकविधानुमितिसामग्रीप्रतिबन्धकतयैवोपपत्तेः तादृशविशिष्टधर्मघटितधर्मावच्छिन्नहेतुकानुमितिसामग्रीणां प्रतिबन्धकत्वाकल्पनात् इत्थञ्चैतादृशलाघवेन नीलादिप्रतिबन्धकबाधदशायां नीलपर्वतो वह्निव्याप्याधूमवानित्यादिपरामर्शादनुमित्युत्पादस्य सयुक्तिकत्वे तादृशानुमितौ व्यभिचारवारणाय परामर्शजन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशनमावश्यकमेवेति किमनुमितौ लिङ्गविषयताभ्युपगमेन।

यत्तु अनुमितौ लिङ्गविषयताभ्युपगमे परामर्शस्य पृथक् कारणत्वकल्पनेन लाघवं प्रत्यक्षस्थलीयक्लृप्तायां विशिष्टविशेष्यकवैशिष्ट्यबुद्धौ विशेष्यतावच्छेदकप्रकारकनिश्चयहेतुतयैवोपपत्तेरिति, तत्तुच्छम्। अनुमितिप्रत्यक्षसाधारणज्ञानत्वादिधर्माणां नित्यसाधारण्येन तज्जन्यतावच्छेदकत्वासम्भवात् विजातीयप्रत्यक्षादीनामेव तथात्वस्यावश्यकत्वादित्यस्य प्रागेव दूषितत्वात्।

अथ नित्यसाधारणधर्मस्य कार्यतावच्छेदकत्वे नास्माकं विद्वेषः तावतापि क्षतिविरहादिति परामर्शस्य पृथक्कारणत्वाकल्पनप्रयुक्तलाघवं

सम्भवत्येवेति चेत् न, भवति लिङ्गानुपधानमतेऽप्यनुमितौ परामर्शस्य पृथक्-कारणत्वकल्पनं विनैवोपपत्तिः, तथा हि वह्निव्याप्यधूमवान् पर्वतो घटवा-नित्याकारकविशिष्टविशेष्यकबुद्धौ वह्निव्याप्यधूमवान् पर्वत इत्याद्याकारक-विशेष्यतावच्छेदकप्रकारकनिश्चयहेतुतायां विशेष्यतावच्छेदकाद्यंशे निश्चयपर्या-प्तत्वनिवेशनमावश्यकम्, अन्यथा वह्निव्याप्यधूमवान्न वा नीलपर्वत इत्यादिसं-शयाद्विशिष्टबोधवारणासम्भवात्। एवञ्च नीलपर्वतो वह्निव्याप्यधूमवानित्यादि-निश्चयजन्यनीलादिभानप्रतिबन्धकसमवधानकालीनवह्निव्याप्यधूमवान् पर्वतो घटवानित्याकारकविशिष्टवैशिष्ट्यबुद्धौ व्यभिचारवारणाय तज्जन्यतावच्छेदक-कोटाव्यहितोत्तरत्वं निश्चयत्वघटकदलद्वये शुद्धत्वनिवेशनमावश्यकम्। एवञ्च तत्र विषयनिवेशनप्रयोजनाभावात्तादृशनिश्चयविशिष्टत्वस्यैव तथात्वम-भ्युपेयते, तथा च लिङ्गविषयताया अनभ्युपगमे प्रत्यक्षस्थलीयोपदर्शितवि-शेष्यतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदकाक्रान्ततया प्रत्यक्षस्थलीयका-र्यकारणभावेनैव निर्वाहः

अथ विशेष्यतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदककोटौ विषय-विशेषानिवेशे वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकत्वं जन्यता-वच्छेदकमिति चेत्, तत्प्रकारकेच्छाविरहविशिष्टतादृशविरोधिसामग्र्यभावस्या-त्मन एव वा, (१) न च तादृशधर्मस्यात्मजन्यतावच्छेदकत्वोपगमेऽतिरिक्तकार्य-कारणभावकल्पनापत्तिरिति क्लृप्तविशेष्यतावच्छेदकप्रकारकनिर्णयजन्यता-वच्छेदककोटावेव निवेशः समुचित इति वाच्यम्, अनाहार्याप्रामाण्यग्रहाभावकू-टविशिष्टविशेष्यतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेकदकोटौ तन्निवेशे कारणतावच्छेदकोटिप्रविष्टविशेषणानां विशेष्यविशेषणभावेन विनिगमनाविरहे वर्द्धितेषु नानाकार्यकारणभावेषु कार्यतावच्छेदकगौरवात् तदपेक्षया तादृशधर्मा-वच्छिन्नं प्रत्यात्मत्वेन स्वातन्त्र्येण हेतुत्वकल्पनस्यैवोचितत्वात् इति। एतेन विजातीयप्रत्यक्षत्वादीनां विशेष्यतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदक-त्वोपगमेऽपि वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यधूमवत्ता-परामर्शस्य वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकवह्न्यनुमिति-हेतुत्वाकल्पनेन लिङ्गोपधानमते लाघवमित्यपि परास्तम्। उक्तरीत्या चिन्ता-मणिकारमते वह्निव्याप्यधूमवान् पर्वतो घटवानित्यादिविशिष्टबोधस्थलीय-वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकधूमादिमत्ताप्रकारकज्ञानहेतु-तयैव निर्वाहे गौरवानवकाशात्।

न च तादृशविशिष्टवैशिष्ट्यबोधे विशेष्यतावच्छेदकप्रकारकज्ञानयोः कार्यकारणभावेऽव्यवहितोत्तरत्वनिवेशनस्यावश्यकतायामेव तादृशकार्यकारणभावेन निर्वाहः, अव्यवहितोत्तरत्वनिवेशस्यावश्यकता चेत्तदैव निश्चयत्वादिनिवेशानुरोधेन विशेष्यतावच्छेदकांशे पर्याप्तिनिवेशस्यात्तदेव न, वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकवह्निव्याप्यधूमसन्देहस्याप्रसिद्ध्यानिश्चयत्वानिवेशादिति वाच्यम्। निश्चयत्वस्यानिवेशेऽपि वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यधूमवानित्यकारकज्ञानदशायां नीलपर्वतत्वावच्छिन्नविशेष्यतायां धूमाभाववद्वृत्तित्वाद्यवगाहिभ्रमत्वग्रहसत्वे उपदर्शितविशिष्टवैशिष्ट्यावगाहिबोधोत्पत्त्या तादृशज्ञानहेतुतायां तथाविधभ्रमत्वानिवेशात्, वह्निव्याप्यधूमवान्नीलपर्वतो वह्निव्याप्यधूमवानित्याकारकज्ञानदशायां तादृशभ्रमत्वे तादृशविशिष्टवैशिष्ट्यबोधवारणाय पर्याप्तिनिवेशस्यावश्यकत्वात्। एवञ्च वह्निव्याप्यधूमवान्नीलपर्वतो वह्निव्याप्यधूमवानित्यादिपरामर्शजन्यनीलादिबोधविरोधिसामग्रीकालीनबोधे व्यभिचारवारणाय जन्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशनमावश्यकम्।

एतेन वह्निव्याप्यधूमवत्पर्वतान्यो न वह्निमानित्येतादृशेतरबाधबुद्धेर्वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकवह्न्यनुमितिहेतुताकल्पनेन लिङ्गोपधानमते लाघवं यत्तदप्यपास्तम्। उपदर्शितरीत्या वह्न्यभाववान् वह्निव्याप्यधूमवत्पर्वतान्यो घटवानित्यादिविशिष्टवैशिष्ट्यबोधस्थलीयवह्निव्याप्यधूमवत्पर्वतान्यो न वह्निमानित्यादिविशेष्यतावच्छेदकप्रकारकज्ञानहेतुतयैवोपपत्तेः चिन्तामणिकारमतेऽपि तादृशेतरबाधबुद्धिहेतुताधिक्यविरहात्।

यत्तु आचार्यमते पर्वतो वह्निमानित्यादिसिद्धीनामनुमितिप्रतिबन्धत्वाकल्पनेन लाघवं, समानाकारकानुमितिबन्धकतायाः तादृशसिद्धिकाले लिङ्गादिविषयिण्यनुमितेरभ्युगमे क्षतिविरहात्। अथ तादृशसिद्धेरनुमित्यप्रतिबन्धकत्वे वह्निमत्पर्वतवान् देश इत्याकारकविशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षादिसामग्र्या इच्छाविशिष्टानुमितिप्रतिबन्धकत्वकल्पनाधिक्यम्। न च वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकवह्न्यनुमितौ तादृशप्रतिबन्धकताकल्पनं चिन्तामणिकारमतेऽप्यावश्यकम्। अन्यथा तादृशसामग्रीकाले वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यधूमवत्ता-

परामर्शात्तथाविधानुमित्यापत्तेः, शुद्धपर्वतत्वावच्छिन्नपक्षकानुमितिर्नास्त्येवेति न तादृशसामग्रीप्रतिबन्धकताकल्पनाधिक्यमिति वाच्यम्, वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकपरामर्शजन्यतादृशानुमितिस्थलीयप्रतिबन्धकतायां तथाविधपरामर्शजन्यानुमितित्वप्रकारकेच्छाया उत्तेजकत्वात्, तादृशपरामर्शशून्यकाले तथाविधेच्छासत्त्वे शुद्धपर्वतत्वावच्छिन्नधर्मिकपरामर्शादनुमित्यापत्तिवारणाय शुद्धपर्वतत्वावच्छिन्नधर्मिकपरामर्शजन्यानुमितिस्थले तादृशसामग्रीप्रतिबन्धकत्वान्तरस्यावश्यकतया तत्कल्पनाया एवाधिक्यात् ।

एवं शुद्धपर्वतत्वावच्छिन्नधर्मिकपरामर्शजन्यानुमितेः पर्वतो वह्निमानित्येतादृशसिद्धेरविरोधित्वे वह्निसत्पर्वतवान् देश इत्याकारकविशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षादौ तादृशपरामर्शघटितवह्न्याद्यनुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनाधिक्यादपि गौरवम् ।

मन्मते तादृशपरामर्शघटितानुमितिसामग्रीदशायां पर्वतो वह्निमानित्यादिनिर्णयाभावस्यावश्यकतया क्लृप्तकारणविरहादेव तादृशविशिष्टवैशिष्ट्यबोधात्मकप्रत्यक्षानुदयोपपत्तेरिति चेन्, प्रत्वेनादृशप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवं तथाविधसिद्धिप्रतिबन्धकतामते, तथाप्यस्मन्मते वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यधूमवानित्यादिपरामर्शघटितानुमितिसामग्रीणामनन्तानामभिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकल्पनेन लाघवं निराबाधमेव. तादृशानुमितिसामग्रीकाले शुद्धपर्वतत्वावच्छिन्नविशेष्यकवह्निव्याप्यपरामर्शघटितानुमितिसामग्र्या आवश्यकतया तत्प्रतिबन्धकतयैवोपपत्तेः ।

भवन्मते तु शुद्धपर्वतत्वावच्छिन्नविशेष्यकपरामर्शजन्याऽनुमितिसामग्र्याः पर्वतो वह्निमानित्यादिसिद्ध्यभावघटितायास्तादृशसिद्धिकाले शुद्धपर्वतत्वावच्छिन्नविशेष्यकधूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकपरार्शादिसत्त्वे विभिन्नविषयकप्रत्यक्षादिवारणाय तादृशविशिष्टधर्मावच्छिन्नविशेष्यकपरामर्शघटितसामग्रीणां पृथक् प्रतिबन्धकताकल्पनमावश्यकमेव । न चाचार्यनये पर्वतो वह्निमानित्याद्याकारकसिद्धेः पर्वतो वह्निव्याप्यधूमवान वह्निव्याप्यधूमवान् पर्वत इत्यादिपरामर्शजन्यानुमितावपि वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्यादिसिद्धेरविरोधितया तादृशसिद्धिः वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकपरामर्शघटितानुमितिसामग्री अघटितैव, तदानीन्न शुद्धपर्वतत्वाव-

च्छिन्नधर्मिकपरामर्शघटितसामग्रीताद्दशपरामर्शजन्यानुमितौ तथाविध-सिद्धेर्विरोधित्वात् अतस्तत्र विभिन्नविषयकप्रत्यक्षादिवारणाय उपदर्शित-विशिष्टधर्मावच्छिन्नधर्मिकपरामर्शघटितसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनमावश्यकमेवेति वाच्यम् ताद्दशविशिष्टधर्मावच्छिन्नधर्मिकपरामर्शकाले आचार्य-मतानुयायिभिरपि चिन्तामणिमतसिद्धानुमितेर्विलक्षणाया एव वह्निव्याप्य-धूमवान् पर्वतो वह्निमानित्याकारिकानुमितेरेव स्वीकरणीयतया ताद्दशपरा-मर्शजन्यानुमितावपि वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्यादिसिद्धेर्विरोधि-त्वात् ताद्दशसिद्धिकाले वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नधर्मिकपरामर्शघ-टितानुमितिसामग्र्या अप्यसत्त्वात्। तस्मात् विशिष्टधर्मावच्छिन्नधर्मिकपरा-मर्शघटितसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवं दुर्वारमेवैतन्मते ।

एतेन लिङ्गोपधानमते धूमादिलिङ्गकानुमितिसामग्रीप्रतिबन्धकतायां धूमाद्यभाववान् पर्वत इत्याद्याकारकहेतुताभानप्रतिबन्धकबाधाद्यभावनिवेशात् गौरवं, न च ताद्दशबाधाभावादीनां सामग्रीप्रतिबन्धकतायां निवेशे ताद्दशबाधकालीनानुगतप्रत्यक्षादिगोचरेच्छायामुत्तेजकत्वाकल्पनेन लाघवमिति वाच्यम्। ताद्दशेच्छानामुत्तेजकत्वेऽप्येतन्मते यत्र वह्निव्याप्यधूमवत्तानिर्णय-काले हेतुभानप्रतिबन्धकबाधबुद्धिरनुगतानुमितीच्छा वह्नेः शाब्दसामग्री घटादेः प्रत्यक्षसामग्री अननुगततत्प्रत्यक्षगोचरेच्छा च तत्र घटप्रत्यक्षाद्युत्पत्त्या घटप्रत्यक्षादिकं प्रति वह्निशाब्दसामग्रीप्रतिबन्धकतायां ताद्दशाननुगतप्रत्यक्षा-दिगोचरेच्छानामुत्तेजकत्वाधिक्येन लाघवानवकाशात् ।

अस्मन्मते तत्र वह्न्याद्यनुमितेरेवोत्पत्त्या घटप्रत्यक्षानुदयान्न ताद्दशप्रत्यक्षेच्छानामुत्तेजकत्वमिति तस्माद्धेतुभानप्रतिबन्धकीभूतबाधाभावा-दीनामनुमितिसामग्रीमध्यनिवेशप्रयुक्तगौरवं दुर्वारमेवेति निरस्तम्। लिङ्गानु-पधानमते ताद्दशबाधाभावादिघटिताया वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्न-पक्षकानुमितिसामग्र्या प्रतिबन्धकताधिक्येन विपरीतगौरवापातादिति ।

अथैकत्र द्वयमिति रीत्या धर्मिविशेषणतापन्नपर्वतत्ववह्निव्याप्यो-भयधर्मावच्छिन्नपक्षकधूमादिपरामर्शघटितसामग्र्याः पृथक् प्रतिबन्धकता-कल्पनमाचार्यमतेऽप्यावश्यकम्, ताद्दशसामग्रीकाले पर्वतो वह्निव्याप्यधूमवानि-त्याकारकताद्दशपरामर्शघटितसामग्र्याअनायत्यात्, तथा हि यद्येकत्र द्वयमिति

रीत्या धर्मिकविशेषणतापन्नतादृशोभयधर्मावच्छिन्नपक्षकानुमितौ तदुभयधर्मविशिष्टविशेषणतया हेतुभूतधर्मादेर्भानमुपेयते तादृशानुमितावसमानाकारकतया वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यधूमवान् पर्वतो वह्निमानित्येतादृशासिद्धेरविरोधितया पर्वतो वह्निव्याप्यधूमवान् इत्येतादृशपरामर्शजन्यानुमितौ च तादृशसिद्धेर्विरोधितया तादृशासिद्धिकाले तादृशोभयधर्मावच्छिन्नपक्षकपरामर्शघटितसामग्री वर्त्तते, न तु पर्वतत्वावच्छिन्नपक्षकपरामर्शघटितसामग्री ।

यदि च तादृशोभयधर्मावच्छिन्नपक्षकपरामर्शस्थले चिन्तामणिकारमतसिद्धानुमित्यविलक्षणैवानुमितिः स्वीक्रियते, तदा तादृशानुमितौ धूमाभाववान् पर्वत इत्यादिबाधबुद्धेरविरोधितया पर्वतत्वावच्छिन्नपक्षकधूमादिलिङ्गकानुमितौ चाचार्यमतानुयायिभिः निरुक्तधर्मावच्छिन्नलिङ्गकानुमितौ तस्या विरोधितया तादृशबाधकाले तथाविधोभयधर्मावच्छिन्नपक्षकानुमितिसामग्री वर्त्तते न तु पर्वतत्वावच्छिन्नपक्षकधूमादिपरामर्शघटितसामग्रीति । एवं च एकत्र द्वयमिति रीत्या धर्मिविशेषणीभूतपर्वतत्ववह्निव्याप्यधूमाद्युभयधर्मावच्छिन्नपक्षकानुमितिसामग्र्याः पर्वतत्वविशिष्टविशेषणतापन्नवह्निव्याप्यधूमपर्वतत्वोभयधर्मावच्छिन्नपक्षकानुमितिसामग्रीव्याप्यत्वादुभयमतसिद्धतादृशसामग्रीप्रतिबन्धकतयैव निर्वाहेण तादृशसामग्र्याः प्रतिबन्धकत्वं लिङ्गानुपधानमते वादिनापि कल्पनीयमिति नोक्तसामग्री प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवावकाश इति चेन्न, पर्वतत्वादिविशिष्टधूमादिवैशिष्ट्यानवगाहिन्यास्तादृशोभयधर्मावच्छिन्नविशेष्यकासिद्धेस्तादृशोभयधर्मावच्छिन्नविशेष्यकानुमितिविरोधितया पर्वतत्वादिविशिष्टे धूमादिविशेषणताकतादृशोभयधर्मावच्छिन्नविशेष्यताकानुमितौ च तस्या विरोधित्वमित्युपदर्शितसामग्र्या एतादृशानुमितिसामग्रीव्याप्यत्वाभावादेव तादृशानुमितिसामग्रीप्रतिबन्धकताधिक्यस्य दुर्वारत्वात् । अथैवमपि भ्रमत्वविशिष्टपर्वतत्वावच्छिन्नपक्षकवह्निनिर्णयविषयकधूमत्वादिरूपासिद्ध्यप्रामाण्यघटितधर्मावच्छिन्नलिङ्गकानुमितौ लिङ्गभानं निर्युक्तिकम् एकत्र द्वयमिति रीत्या तादृशधर्मावच्छिन्नपर्वतत्वाद्युभयधर्मितावच्छेदकानुमितौ सिद्धेरविरोधितया तत्सामग्र्या पर्वतत्वादिविशिष्टतादृशधर्मावच्छिन्नविशेषणकतदुभयधर्मितावच्छेदकानुमितिसामग्रीव्यापकतया तत्प्रतिबन्धकतयैवोपपत्तौ लिङ्गानुपधानमतेऽपि पर्वतत्वादिविशिष्टतादृशहेतुतावच्छेदकावच्छिन्नविशेषणकतदुभयधर्मावच्छिन्नविशेष्यताकानुमितिसामग्रीप्रतिबन्धकताधिक्याभावात् । पर्वतो वह्निमानित्यादिसिद्धेस्तादृशधर्मावच्छिन्नलिङ्गकानुमित्यविरोधित्वे उपदर्शितवि-

शिष्टवैशिष्ट्यबोधसामग्रीप्रतिबन्धकताधिक्यात् तादृशसिद्धिप्रतिबन्धकतात्रुटिप्रयुक्तगौरवस्यानवकाशादिति चेन्नैवम्, आचार्यमतानुयायिभिरुक्तधर्मावच्छिन्नलिङ्गानुमितावेकत्र द्वयमिति रीत्या तादृशहेतुपर्वतत्वाद्युभयभानमुपगन्तव्यम्। एवमेकत्र द्वयमिति रीत्या धर्मिविशेषणीभूततदुभयधर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नहेतुकानुमितिसामग्रीत्वव्याप्तिकैव पर्वतत्वावच्छिन्नपक्षकतद्धर्मावच्छिन्नहेतुकानुमितिसामग्री, तथा चोपदर्शितधर्मावच्छिन्नलिङ्गकानुमितौ लिङ्गविषयतास्वीकार एकत्र द्वयमिति रीत्या धर्मिविशेषणतापन्नपर्वतत्वतादृशधर्मान्नोभयधर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नलिङ्गकानुमितिसामग्रीप्रतिबन्धकताविभिन्नविषयकप्रत्यक्षादौ न कल्प्यते, पर्वतत्वावच्छिन्नपक्षकोक्तधर्मावच्छिन्नलिङ्गकानुमितिसामग्रीप्रतिबन्धकतयैव निर्वाहादिति तत्रापि लिङ्गविषयकत्वं सयुक्तिकमेव।

नचैकत्र द्वयमिति रीत्या धर्मिविशेषणतापन्नोपदर्शितहेतुपर्वतत्वोभयधर्मावच्छिन्नपक्षकोक्तधर्मावच्छिन्नलिङ्गकानुमितेः शुद्धपर्वतत्वावच्छिन्नपक्षकोपदर्शितधर्मावच्छिन्नलिङ्गकानुमित्यविलक्षणत्वेन तत्र शुद्धपर्वतत्वावच्छिन्नपक्षकतल्लिङ्गकपरामर्शस्य व्यभिचारः निश्चयत्वादिनिवेशानुरोधेन कारणतावच्छेदककोटौ धर्मितावच्छेदकाद्यंशे पर्याप्तिनिवेशस्यावश्यकत्वादिति वाच्यम् तदानीमेतन्मते कार्यतावच्छेदककोटावव्यवहितोत्तरत्वस्य निवेशनीयतया व्यभिचारानवकाशात्। अथैवमपि शुद्धपर्वतत्वावच्छिन्नपक्षकपरामर्शघटितसामग्रीप्रतिबन्धकतायां परामर्शे शुद्धपर्वतत्वावच्छिन्नविशेष्यताकत्वस्यावश्यं निवेशनीयतया, तत एवैकत्र द्वयमिति रीत्या धर्मिविशेषणतापन्नोपदर्शितोभयधर्मावच्छिन्नपक्षकपरामर्शघटितसामग्रीकाले प्रत्यक्षादिवारणं न सम्भवति, शुद्धपर्वतत्वावच्छिन्नधर्मिकपरामर्शविरहादिति तादृशोभयधर्मावच्छिन्नधर्मिकपरामर्शघटितसामग्र्याः प्रतिबन्धकत्वान्तरं लिङ्गोपधानमते आवश्यकमिति न लाघवावकाश इतिचेत्सत्यं लिङ्गानुपधानमते तादृशोभयधर्मावच्छिन्नविशेष्यकपरामर्शघटितसामग्र्या एव द्वैविध्यात् प्रतिबन्धकताद्वयम्।

एतन्मते एक एव प्रतिबन्धकत्वमिति लाघवं निराबाधमेव लिङ्गानुपधानमते तादृशसामग्र्याः द्वैविध्यञ्च तादृशपरामर्शदशायां तादृशहेतुभानप्रतिबन्धकतदवच्छिन्नधर्मिकसाध्याभावादिनिर्णयसत्त्वे नीलपर्वतो वह्निव्याप्यधूमवान् इत्यादिपरामर्शदशायां नीलादिभानप्रतिबन्धकसत्त्वे इवैतन्मते पर्वतो-

वह्निमानित्येतादृशानुमित्युदयेन तथाविधबाधसत्त्वे तादृशोभधर्मावच्छिन्न-विशेष्यकानुमित्युदयेनेह फलद्वैविध्यात् ।

न च तादृशहेतुभानप्रतिबन्धकोपदर्शित बाधादिदशायामाचार्यमत इव लिङ्गानुपधानमतेऽपि न पर्वतो वह्निमानित्याद्यनुमितिः स्वीकरणीयेति वाच्यम् तदस्वीकारे तादृशधर्मावच्छिन्नभाने तद्घटकतयोपदर्शितहेतुपर्वतत्वोभयविशिष्टविशेषणतयोपदर्शितहेतुभानस्यावश्यकता शुद्धपर्वतत्वावच्छिन्नपक्षकतादृशधर्मावच्छिन्नहेतुकपरामर्शस्यानुमितौ हेतुतायाँ तद्घटितसामग्र्याः विभिन्नविषयकप्रत्यक्षादिप्रतिबन्धकतायाश्चाधिक्यात् । तस्मात् लिङ्गोपधानमते परामर्शजन्यतावच्छेदकगर्भेऽव्यवहितोत्तरत्वप्रयुक्तलाघवाद्यसम्भवेऽप्युपदर्शितरीत्या सामग्रीप्रतिबन्धकताकूटप्रयुक्तलाघवमक्षतमेवेति ।

तदप्यसत्, यदि पर्वतो वह्निव्याप्यधूमवान् इत्यादिपरामर्शजन्यानुमितौ वह्निमानित्यादिसिद्धेरविरोधित्वं स्यात्तदेवोक्तक्रमेण लाघवं सम्भवति, तदेव न, यतः सिद्धिदशायां पक्षतावच्छेदकविधेयतावच्छेदकादिघटकतयाऽधिकविषयिण्यनुमितिरेवोत्पद्यते, न तु यथाकथञ्चिदधिकविषयिणी, तथा सति पर्वतो वह्निमानित्यादिसिद्धिकाले पर्वतो वह्निमान् घटवांश्चेति समूहालम्बनानुमितेरधिकविषयतयोत्पत्तेर्दुर्वारत्वात् । एवञ्च हेत्वादेः पक्षतावच्छेदकाद्यघटकत्वाद्धेतुत्वादिरूपाधिकभाने पर्वतो वह्निमानित्यादिसिद्धिकालेऽनुमित्युत्पादो विरुद्ध एव अनुभवानुरोधे च सिद्धिमात्रस्यैवाप्रतिबन्धकत्वप्रसङ्गेन प्रभाकरमतप्रवेशापत्तिः, एवं च पक्षतावच्छेदकविशिष्टे साध्यवत्तानिर्णयदशायामपि हेत्वादिरूपाधिकपदार्थावगाहितया अनुमितेरुत्पादस्याचार्यसम्मतत्वे तेषां पक्षतावच्छेदकस्य हेतुत्वानभ्युपगमस्य निर्युक्तिकत्वापत्तेः । तथा ह्यत्रेदं बीजम्, यथा गन्धवतीतरेभ्यो भिद्यते इत्यादौ गन्धादेर्हेतुत्वे तत्सामानाधिकरण्यघटितेतरभेदादिव्याप्यत्वग्रहे तत्रेतरभेदसामानाधिकरण्यभाने समानसम्वित्संवेद्यतया तद्विशिष्टे इतरभेदादिवैशिष्ट्यभानमावश्यकमिति सिद्धिसत्त्वादनुमितिर्नोत्पत्तिमर्हतीति तदिदानीमकिञ्चित्करम् गन्धादिरूपपक्षतावच्छेदकविशिष्टे इतरभेदादिरूपसाध्यनिर्णयसत्त्वेऽपीतरभेदव्याप्यवती इतरभेदवतीत्याद्याकारिकायानुमितेः समानाकारिकायाःसिद्धेस्तदानीमसत्त्वेनानुमित्युत्पत्तौ बाधकाभावादिति, तस्मात् पक्षतावच्छेदकविशिष्टे साध्यवत्तानिर्णयविरोधीति नोक्तलाघवावकाश इति ।

यत्तु लिङ्गानुपधानमते शुद्धपर्वतत्वावच्छिन्नविशेष्यताकानुमितौ विरोधिसामग्र्याः प्रतिबन्धकत्वाधिक्यमाचार्यमते तादृशानुमितेरलीकतया तदनवकाशान् धूमपर्वतत्वोभयावच्छिन्नविशेष्यताकानुमितौ विरोधिसामग्रीप्रतिबन्धकत्वकल्पनञ्चोभयवादिसिद्धमेव, अन्यथा विरोधिसामग्रीकाले तादृशविशिष्टधर्मावच्छिन्नपरामर्शात्तथाविधानुमितेर्लिङ्गोपधानमतेऽप्यापत्तेः। न च धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकानुमितिस्थलीयप्रतिबध्यप्रतिबन्धकभावे शुद्धपर्वतत्वावच्छिन्नविशेष्यकानुमितिसाधारणधर्मस्य प्रतिबध्यतावच्छेदकत्वोपगमात्तत एव निर्वाहेण शुद्धपर्वतत्वावच्छिन्नविशेष्यकानुमितिस्थले लिङ्गानुपधानमतेऽपि प्रतिबन्धकताधिक्यमिति वाच्यम्, धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकानुमितिस्थलीयप्रतिबन्धकतायां तादृशविशिष्टधर्मावच्छिन्नविशेष्यताकत्वप्रकारकेच्छाया उत्तेजकत्वात् तादृशेच्छाकाले पर्वतो वह्निव्याप्यधूमवान् इत्यादिपरामर्शात् तन्मतेऽनुमितिवारणाय तत्र प्रतिबन्धकत्वान्तरकल्पनस्यावश्यकत्वादिति तदप्यसत् धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यकपरामर्शजन्यानुमितिस्थलीयविरोधिसामग्रीप्रतिबन्धकतायां तादृशपरामर्शजन्यताप्रकारकेच्छाया उत्तेजकत्वात्, तादृशानुमित्साकाले लिङ्गोपधानमते शुद्धपर्वतत्वावच्छिन्नविशेष्यकपरामर्शजन्यानुमितेरनुदयेन तत्र प्रतिबन्धकत्वान्तरस्यावश्यं कल्पनीयतया लाघवानवकाशात्। यत्तु लिङ्गोपहितभानमते सिद्धेर्विरोधिसामग्रीणाञ्च प्रतिबध्यतावच्छेदकशरीरलाघवमनुगतमेव. तथा हि एकलिङ्गकानुमित्साकाले सिद्धिसत्त्वे विरोधिसामग्रीदशायामन्यलिङ्गकानुमितिवारणाय तल्लिङ्गकानुमितौ तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावसत्त्वेन हेतुता वाच्या तज्जन्यतावच्छेदकं यदि पर्वतपक्षकवह्न्यनुमितित्वं तदाऽन्यलिङ्गानुमितौ व्यभिचार इति तल्लिङ्गकपरामर्शजन्यानुमितित्वं तज्जन्यतावच्छेदकं. तच्च जन्यताघटिताघटिततया गुरुतरम्। अस्मन्मते च धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावजन्यतावच्छेदकं धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकवह्न्यनुमितित्वमित्यतो नान्यलिङ्गकानुमितौ व्यभिचार इति।

अथैवं वह्निव्याप्यधूमविशिष्टपर्वतत्वावच्छिन्नपक्षकधूमलिङ्गकानुमितौ व्यभिचार इति लिङ्गोपधानमतेऽपि शुद्धपर्वतत्वाच्छिन्नोद्देश्यताकानुमितित्वमेव तज्जन्यतावच्छेदकं वाच्यमित्यन्यलिङ्गकानुमितौ व्यभिचारोद्धार एव तत्राप्युद्देश्यताया शुद्धपर्वतत्वावच्छिन्नत्वात्। न च धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यताकत्वे सति शुद्धपर्वतत्वावच्छिन्नोद्देश्यताकवह्न्यनुमितित्वं धूमलिङ्ग-

केच्छाविरहविशिष्टवह्निमत्तानिर्णयाभावजन्यतावच्छेदकं तेनान्यलिङ्गकानुमितौ विशिष्टधर्मावच्छिन्नपक्षकानुमितौ च व्यभिचार इति वाच्यम्। एवमपि तादृशविशिष्टधर्मावच्छिन्नधर्मिकधूमपरामर्शशुद्धपर्वतत्वावच्छिन्नालोकपराम - र्शाभ्यां जनितायामालोकलिङ्गकेच्छाधीनायां समूहालम्बनपरामर्शजन्यानुमितौ व्यभिचारप्रसङ्ग इति चेन्न,। शुद्धपर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूम-निष्ठविशेषणत्वाभिन्नैककालीनत्वसंसर्गावच्छिन्नवह्निविधेयतानिरूपितविशेषण-ताया एव जन्यतावच्छेदकत्वोपगमात् तादृशविशिष्टधूमत्वावच्छिन्नपक्षका-नुमितौ धूमविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमविशेषणताया एवैक-कालीनत्वसंसर्गावच्छिन्नविशेषणत्वाभिन्नत्वान्न व्यभिचार इति तस्मात् लिङ्गोपधानमते सिद्धेर्विरोधिसामग्र्याः प्रतिबन्धकतावच्छेदकलाघवं निरा-बाधमेतन्मतेऽप्यनुपादेयमेव. तथा हि यदि तत्तल्लिङ्गकानुमितौ तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावत्वादिना हेतुता कल्प्यते तदेव तादृश-लाघवं सम्भवति तदेव न; तथा सति लिङ्गभेदेन पक्षताकारणताबाहुल्यापत्तेः। किन्तु सामान्यतोऽनुमित्साविशिष्टान्यपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नि-विधेयकानुमितित्वावच्छिन्नं प्रति पर्वतत्वावच्छिन्नविशेष्यकवह्निप्रकारकनिर्णय-त्वेनैकप्रतिबन्धकत्वं कल्प्यते, अनुमित्साविशिष्टत्वं स्वविशेष्यकत्वस्वाव्यवहितो-त्तरक्षणोत्पत्तिकत्वोभयसम्बन्धेन। आलोकलिङ्गकानुमित्वप्रकारकेच्छाकालीन-धूमादिलिङ्गकानुमितेः तादृशेच्छाविशेष्यत्वाभावात् न तादृशोभयसम्बन्धेनानु-मित्साविशिष्टत्वमिति तस्या अपि प्रतिबध्यतावच्छेदकाक्रान्तत्वम्। नचैवमनु-मित्साविशिष्टज्ञानस्य तादृशसिद्ध्यभावजन्यतावच्छेदकाक्रान्तस्य परामर्शा-दिना जननात् विनानुमित्सां परामर्शादिजन्यतावच्छेदकावच्छिन्नत्वापत्तिः, तत्रानुमित्सात्वे न हेतुत्वेऽप्येकलिङ्गकपरामर्शकालेऽन्यलिङ्गकानुमित्सासत्वेऽनु-मित्यापत्तिरिति, तत्तलिङ्गकानुमित्साविशिष्टान्यज्ञानत्वावच्छिन्नं प्रति तत्तल्लि-ङ्गकानुमित्सासत्वेनहेतुता वाच्या। इत्थञ्चेच्छाया लिङ्गभेदेन कारणताबा-हुल्यं सिद्ध्यभावस्य हेतुत्वान्तरञ्च तदपेक्षया तत्तल्लिङ्गकेच्छाविरहविशिष्ट-सिद्ध्यभावत्वेन हेतुत्वकल्पनमुचितमिति वाच्यं, स्वीयव्याप्तिप्रकारतानिरू-पितविशेष्यतावच्छेदकधर्मवल्लिङ्गकत्वप्रकारतासम्बन्धेन व्याप्यवत्तानिर्णयवि-शिष्टानुमित्सात्वेन वाऽनुमित्सया हेतुत्वकल्पनात्, अन्यलिङ्गकपरामर्शकालीन-स्यान्यलिङ्गकेच्छाबलादनुमित्यापत्त्यसम्भवेन तत्तल्लिङ्गकानुमितिगोचरेच्छा-त्वेन हेतुताया अकल्पनादिति।

वस्तुतस्तु । इच्छाया उत्तेजकत्वकल्पनेऽपि तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्याद्यनुत्तरानुमितित्वस्यैव तादृशसिद्ध्यादिप्रतिबध्यतावच्छेदकत्वोपगमादेवानुमितौ व्यभिचारानवकाशात् । तत्तल्लिङ्गकपरामर्शजन्यत्वस्य कार्यतावच्छेदककोटौ न प्रवेशः, तादृशसिद्ध्यनुत्तरत्वस्य निवेशादेव गौरवमिति तु नाशङ्कनीयम्, ततस्तदनिवेशे उत्तेजकीभूतानामनुगताननुगतनानाविधेच्छानामभावस्यैकत्र निवेशनीयतया विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्यप्रसंगः । तन्निवेशे तु तत्तदिच्छाभावं पृथक् पृथक् निवेश्यैव प्रतिबन्धकता कल्प्यते, तत्तदिच्छाविरहविशिष्टसिद्धिप्रतिबध्यतावच्छेदककोटौ तत्तदिच्छाविरहविशिष्टसिद्ध्यनुत्तरत्वनिवेशेनैव व्यभिचारानवकाशात् अभावकूटस्यैकत्र निवेशे क्षतिविरहादिति । यत्तु लिङ्गोपधानमते वह्निव्याप्याभाववान् पर्वतो घटवानित्यादिविशिष्टवैशिष्ट्यबोधत्वावच्छिन्नं प्रति वह्न्यनुमितिसामग्र्याः प्रतिबन्धकत्वं न कल्प्यत इति लाघवम् । अनुमितौ पक्षतावच्छेदकविशिष्टविशेषणतया हेतोर्भानस्वीकारे हेतुभानप्रतिबन्धकीभूतबाधाद्यभावस्य घटपटादिगोचरचाक्षुषस्पार्शनादिभेदेनानन्तानुमितिसामग्रीप्रतिबन्धकतायां निवेशेनेतरकारणैः समन्तस्य विशेष्यविशेषणभावेन विनिगमनाविरहेणानन्तप्रतिबन्धकताबाहुल्यात्, कतिपयोपदर्शितविशिष्टवैशिष्ट्यस्थलीयप्रतिबन्धकताकूटस्यैवाकिञ्चित्करत्वमिति चेत्त न, वह्निव्याप्याभाववान् वह्निमानित्याकारकनिर्णयकालीनस्य पर्वतो वह्निव्याप्याभाववानित्यादिनिर्णयस्यावच्छेदकधर्मदर्शनविधयाहेत्वनवगाहिन्या पर्वतो वह्निमानित्यादिर्विशिष्टबुद्धावपि विरोधितया वह्निव्याप्याभावत्वावच्छेदेन वह्न्यभावप्रकारकनिर्णयेन विशेषितस्य पर्वतत्वावच्छिन्नविशेष्यकवह्निव्याप्याभावप्रकारकनिर्णयस्याभावः चिन्तामणिकारमतेऽपि वह्न्यनुमितिसामग्रीप्रतिबन्धकतायां निवेशनीयः । एवञ्च तत्र तादृशनिर्णयेनाविशेषितस्यैव तथाविधनिर्णयस्याभाव आचार्यमतानुयायिभिर्निवेश्यत इति न सामग्रीप्रतिबन्धकतायां हेतुभानप्रतिबन्धकबाधाभावादिनिवेशप्रयुक्तगौरवम् । अपि तु तादृशबाधादिनिर्णयांशे उपदर्शितनिर्णयवैशिष्ट्यनिवेशेन लिङ्गानुपधानमत एव गौरवम् । नचैवमपि पाषाणमयत्ववान् वह्निव्याप्याभाववान् इत्याकारकनिर्णयविशिष्टानां पर्वतः पाषाणमयत्ववानित्याकारकहेतुभानप्रतिबन्धकतावच्छेदकधर्मदर्शनानामनुमितिसामग्रीप्रतिबन्धकतायां निवेशाधिक्यप्रयुक्तगौरवमाचार्यमते दुर्वारमेव । पाषाणमयत्वावच्छेदेन व्याप्याभाववत्तानिर्णयविशिष्टपर्वतत्वावच्छिन्नविशेष्यकपाषाणमयनिर्णयनियतस्य पर्वतो वह्निमानित्यादिवि-

शिष्टबुद्धिविरोधिनोऽवच्छेदकधर्मदर्शनस्य दुर्लभतयोक्तक्रमेण तत्परिहारासम्भवादिति वाच्यम्। पर्वतो वह्निमानित्यादिविशिष्टबुद्धिविरोधिनः पाषाणमयो न वह्निमानिति निर्णयदशायां विशिष्टवह्निव्याप्याभाववान् पाषाणमयः पर्वत इत्याद्यवच्छेदकधर्मदर्शनस्यैवोपदर्शितावच्छेदकधर्मदर्शननियतस्य सौलभ्यात् उपदर्शितरीत्या तादृशगौरवपरिहारसम्भवादिति। तस्मादनुमितिसामग्रीप्रतिबन्धकतायां हेतुभानप्रतिबन्धकबाधाद्यनिवेशप्रयुक्तगौरवस्योपदर्शितरीत्या परिहारसम्भवेन वह्निव्याप्याभाववत्पर्वतवान् देश इत्यादिविशिष्टवैशिष्ट्यबोधं प्रति वह्न्यनुमितिसामग्रीप्रतिबन्धकताकूटानिवेशप्रयुक्तलाघवमाचार्यमते निराबाधमेव।

यदि च वह्निव्याप्यभाववद्द्रव्यवानित्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादौ पर्वतत्वावच्छिन्नपक्षकवह्न्याद्यनुमितिसामग्र्याः प्रतिबन्धकत्वकल्पनमाचार्यमतेऽप्यावश्यकम्, तथाविधानुमितिसामग्रीतादृशप्रत्यक्षसामग्र्योर्यौगपद्यस्य तन्मतेऽपि सम्भवात्। एवञ्च वह्निव्याप्याभाववत्पर्वतवान् देश इत्येतादृशप्रत्यक्षादिसाधारणवह्निव्याप्याभावादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिकमेव तादृशानुमितिसामग्र्याः प्रतिबध्यतावच्छेदकं वाच्यम्। तथा च लिङ्गानुपधानमतेऽपि वह्निव्याप्याभाववत्पर्वतवान् इत्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादौ न तादृशानुमितिसामग्र्याःप्रतिबन्धकताधिक्यम्। तथा च वह्निव्याप्याभावद्द्रव्यमित्यादिप्रत्यक्षस्थलीयप्रतिबन्धकतायां वह्निव्याप्याभावप्रकारतानिरूपितद्रव्यत्वावच्छिन्नप्रकारताशालिप्रत्यक्षं जायतामित्याकारिकेच्छाया उत्तेजकत्वात् तादृशेच्छाकाले तथाविधप्रत्यक्षसामग्र्यामसत्यां वह्निव्याप्याभाववत्पर्वतवान् देश इत्यादिप्रत्यक्षवारणाय तत्र वह्निव्याप्याभावप्रकारतानिरूपितपर्वतत्वावच्छिन्नप्रकारताशालिप्रत्यक्षं जायतामित्याद्याकारिकेच्छानामुत्तेजकीकृत्यानुमितिसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनं लिङ्गानुपधानमतेऽप्यावश्यकमिति वाच्यम्। द्रव्यत्वपर्वतत्वादिरूपप्रकारतावच्छेदकमनिवेश्य वह्निव्याप्याभावप्रकारतानिरूपितप्रकारतावच्छेदकतासम्बन्धेनोपदर्शितनिखिलप्रत्यक्षसाधारणप्रत्यक्षत्वावच्छिन्नं प्रति वह्निव्याप्याभावप्रकारतानिरूपिता या प्रकारता तादृशप्रकारत्वावच्छिन्नप्रकारतानिरूपिता या प्रकारता तन्निरूपितत्वप्रकारतानिरूपितप्रकारत्वविषयतानिरूपितत्वावच्छिन्नत्वप्रकारतानिरूपितप्रकारतासम्बन्धावच्छिन्नप्रतियोगिताकस्योपदर्शितप्रत्यक्षेच्छासाधारणप्रत्यक्षत्वावच्छिन्नाभावस्यैककाली-

नत्वसम्बन्धेनोपदर्शितानुमितिसामग्रीविशिष्टस्यैकप्रतिबन्धकताकल्पने उपदर्शितापत्त्यभावात्। वह्निव्याप्यभावप्रकारतानिरूपितद्रव्यत्वावच्छिन्नप्रकारताशालिप्रत्यक्षं जायतामित्येतादृशेच्छाकालेऽप्युपदर्शितसम्बन्धावच्छिन्नप्रतियोगिताकप्रत्यक्षेच्छात्वावच्छिन्नभावस्य पर्वतत्वादावक्षततत्वमेव ।

एवं पर्वतो वह्निमानित्याद्यनुमितौ वह्निव्याप्याभाववान् पर्वत इत्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिसामग्र्याः तादृशप्रत्यक्षेच्छाविशिष्टाया चिन्तामणिकारमते प्रतिबन्धकत्वकल्पनमित्यपि न, द्रव्यं वह्निमदित्यनुमितौ लिङ्गोपधानमतेऽपि तादृशसामग्रीप्रतिबन्धकत्वकल्पनावश्यकत्वात्, तत्रैव विशेष्यतावच्छेदकतासम्बन्धेन पर्वतो वह्निमानित्याद्याकारकानुमितिसाधारणवह्न्याद्यनुमितिसाधारणवह्न्याद्यनुमितित्वावच्छिन्नं प्रति स्वीयानुमितिनिष्ठविशेष्यतानिरूपितविशेष्यत्वप्रकारतानिरूपितावच्छिन्नत्वप्रकारतानिरूपितप्रकारतासम्बन्धावच्छिन्नप्रकारताकस्य द्रव्यत्वावच्छिन्नविशेष्यकानुमितिर्जायतां पर्वतत्वावच्छिन्नविशेष्यताकानुमितिर्जायतामित्येतादृशनिखिलेच्छासाधारणानुमित्सात्वावच्छिन्नाभावस्य तादृशसामग्रीविशिष्टस्य प्रतिबन्धकत्वकल्पनेनैवोपपत्तेः । पर्वतोवह्निमानित्याद्यनुमितौ तादृशसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनस्य मणिकारमतेऽप्यभावादिति यदि विभाव्यते, तथाऽप्यनुमितिसामग्रीप्रतिबन्धकतायां व्याप्याभावत्वावच्छेदेन साध्यवत्तानिर्णयविशिष्टपक्षतावच्छेदकावच्छिन्नविशेष्यकव्याप्याभावादिनिर्णयस्थले क्लृप्तपक्षतावच्छेदकावच्छिन्नविशेष्यकव्याप्याभावादिमत्तानिर्णयादिमात्रस्य चाचार्यमते निवेशनमिति लाघवमक्षुण्णमेव । तदप्याचार्यमत इव लिङ्गानुपधानमतेऽपि व्याप्याभाववान्पर्वतइत्यादिनिर्णयकाले पर्वतत्वावच्छिन्नपक्षकानुमितिर्न कल्पनीया । तथा च प्राह्याभावानवगाहिनोपि तथाविधनिर्णयप्रतिबन्धकत्वमनुमितौ स्वीकरणीयमेव, एवञ्च व्याप्याभाववत्पर्वतवानित्यादिविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादौ पर्वतत्वावच्छिन्नपक्षकानुमितिसामग्र्यादीनां प्रतिबन्धकत्वं व्याप्याभाववत्त्वावच्छेदेन साध्याभावनिर्णयादिविशिष्टत्वस्यानुमितिप्रतिबन्धकतावच्छेदककोटौ प्रविष्टाभावप्रतियोगिपक्षतावच्छेदकावच्छिन्नविशेष्यकव्याप्याभावाद्यंशे निवेशनञ्च मणिकारमतेऽपि नास्ति ।

अथैवमपि पर्वतो वह्निमानित्याद्यनुमितौ वह्न्यभाववान् पर्वत इत्यादिनिर्णयप्रतिबन्धकत्वकल्पनमेवैतन्मतेऽभ्यधिकम् । लिङ्गविषयतायामनु-

मितौ स्वीकारे तादृशनिर्णयस्य व्याप्त्यादिविशिष्टबुद्धौ बाधमुद्रया क्लृप्तप्रतिबन्धकतयैवोपपत्तेरिति ।चेत् न, अस्माकमपि क्लृप्तप्रतिबन्धकतयैव निर्वाहात् । तथा हि, इच्छाधीनव्याप्त्यादिप्रकारकप्रत्यक्षे व्याप्त्याभावादिनिर्णयाभावस्य व्यभिचारवारणाय तादृशनिर्णयानुत्तरत्वं तादृशनिर्णयाभावजन्यतावच्छेदकं वाच्यम् इच्छाविरहविशिष्टतादृशनिर्णयाभावत्वेन तस्य हेतुत्वे प्रतिबन्धकतावच्छेदककोटिप्रविष्टानाहार्यत्वाप्रामाण्यज्ञानादिभिस्समभिच्छाभावानां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकताबाहुल्यप्रसङ्गात् । आहार्यप्रत्यक्षेच्छाया हेतुत्वोपगमात् न तत्स्थलीयसामग्रीबलात् इच्छाशून्यकाले बाधसत्त्वे विशिष्टप्रत्यक्षापत्तिः । एवञ्च तादृशनिर्णयाभावजन्यतावच्छेदककोटौ विषयविषयिता न निवेश्यते तादृशनिर्णयानन्तरोत्पन्नान्यविषयविशिष्टबुद्धेस्तादृशनिर्णयानुत्तरत्वरूपजन्यतावच्छेदकानाक्रान्ततयैव व्यभिचारानवकाशात् । एवञ्च पर्वतो वह्निमानित्याद्यनुमितेरपि तादृशनिर्णयानुत्तरत्वरूपतादृशनिर्णयाभावजन्यतावच्छेदकाक्रान्ततयाऽनुमितौ लिङ्गविषयतानभ्युपगमेऽपि क्लृप्तप्रतिबन्धकतयैव निर्वाहादिति ।

यत्तु लिङ्गानुपधानमते अभावव्याप्यवान् पर्वतो वह्निव्याप्यवाँश्च पर्वत एतादृशोभयव्याप्यवत्तानिर्णयदशायां महानसीयहृयभावश्च महानसीयवह्निश्च लघुरित्येतादृशलाघवज्ञानसत्त्वे पर्वतो वह्निमान्न वेति संशयानुमितिवारणायैककोटिकानुमितिं प्रत्यपरकोटिकानुमितिसामग्र्याः प्रतिवन्धकत्वं कल्प्यमिति गौरवं, लिङ्गोपधानमते तत्रानुमित्यभ्युपगमेऽपि न संशयानुमितित्वप्रसङ्गः, वह्न्यभावव्याप्ययोर्वह्नितदभावावच्छेदकयोरभावेन तादृशानुमितौ वह्निव्याप्यवान् पर्वतोऽभावव्याप्यद्रव्यवान् महानसीयवह्निमान् वह्न्यभाववान् इत्याकारकतया संशयत्वाभावादिति तत् चिन्त्यम्, संशयानुमितिविचारे तद्वारणप्रकारस्य दर्शितत्वादिति शिवम् ।

---

## ॥ नव्यमतरहस्यम् ॥

व्याप्तिविशिष्टवह्निव्याप्यधूमवान् पर्वतइत्याकारकपरामर्शस्यानुमितिहेतुत्वे गौरवमाह।

अनुमितिं प्रति पर्वतीयधूमव्यापको वह्निरित्याकारकपरामर्शो हेतुः न तु व्याप्तिविशिष्टवह्निव्याप्यधूमवान् पर्वत इत्याकारकस्तस्य हेतुत्वे कारणतावच्छेदककोटौ व्यापकसामानाधिकरण्यरूपव्याप्तिघटकीभूतसामानाधिकरण्यपदार्थविषयतानिवेशाधिक्येन गौरवादिति व्यापकताज्ञानहेतुतावादिनः।

व्यापकताज्ञानहेतुतावादिमते दोषमाह—

अथैतन्मते[1] यत्र[2] पर्वतीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नाभावघटिता पर्वतीयधूमत्वावच्छिन्ननिरूपितव्यापकता न वह्नौ गृहीता अपि तु धूमसमानाधिकरणाभाव प्रयोगितावच्छेदकत्वसामान्यघटिता धूमसामन्यव्यापकतैव[3] तत्र[4] उपदर्शित[5]परामर्शासम्भवेनानुमित्यनुत्पादप्रसङ्ग इति चेत् न।

व्यापकताज्ञानहेतुतावादी स्वमते दोषपरिहारमाह—

न हि व्यापकताज्ञानहेतुतावादिना पक्षीयहेतु[6]समाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नाभावावगाहिज्ञानस्य हेतुता स्वीक्रियते येनोक्तानुपपत्तिः स्यात्[7] किन्तु उपलक्षणविधयापक्षीय[8]त्वावगाहिनो हेतुसमानाधिकर-

---

१ एतन्मते = व्यापकताज्ञानहेतुतावादिमते। २ यत्र = यादृशस्थलविशेषे। ३ धूम = सामान्यव्यापकतैव वह्नौ गृहीता। ४ तत्र = तादृशस्थले। ५ उपदर्शित = पर्वतीयधूमव्यापकवह्निसमानाधिकरणधूमवानिरित्याकारक। ६ हेतु = पर्वतीयधूम। ७ स्यात् = अनुमित्यनुत्पादप्रसङ्गस्स्यात्। ८ पक्षीय = पर्वतीय।

णाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावावगाहिनोज्ञानस्यैवेतिन दोषः[1] ।

व्यापकताज्ञानहेतुतावादिमते गौरवरूपदोषमाह—

अथैतन्मते[2] पर्वतो वह्निसामानाधिकरणाभाववानित्याकारकोपनीतभानं शाब्दबोधादिकं प्रति पर्वतादिपक्षकवह्नियाद्यनुमिति सामग्र्याप्रतिबन्धकत्वकल्पनात् गौरवम् ।

व्याप्तिविशिष्टहेतुप्रकारकपक्षविशेष्यकपरामर्शस्य[3] हेतुतामते तु तथाविधोपनीतभानादौसाध्यसामानाधिकरण्य विशिष्टहेतुमत्तावगाहिनः परामर्शस्य बाधमुद्रया प्रतिबन्धकतायाः क्लृप्तत्वात् तत एव तादृशानुमितिसामग्रीदशायां तदनुत्पादोपपत्तेः; सामग्रीप्रतिबन्धकतायास्तत्राकल्पनीयत्वादिति चेत् अस्त्वेतादृश[4]लघवं, व्याप्तिविशिष्टहेतुप्रकारकपरामर्शस्यहेतुतामते । आलोकव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानादनुमित्यापत्तिवारणाय तादृशज्ञानसत्त्वे[5] विभिन्नविषयकप्रत्यक्षाद्युत्पत्तये परामर्शहेतुतायां सामग्रीप्रतिबन्धकतायाञ्च विशिष्टहेतुतावच्छेदकनिवेशस्यावश्यकतया हेतुतावच्छेदकभेदेनतद्बाहुल्य[6]प्रयुक्तगौरवम् ।

अस्माकन्तु हेतुप्रकारतायाः किञ्चिद्धर्मावच्छिन्नविषयतात्वेनैव निवेशान्न हेतुतावच्छेदकभेदेनकार्यकारणभावबाहुल्यमिति ।

गौरवपरिहारायसाध्यभाववदवृत्तित्वस्यैवकारणत्वम्—

—

अत्रोच्यते व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्तापराम-

---

१ न दोषः = नानुमित्यनुत्पादप्रसङ्गरूपो दोषः । २ एतन्मते = व्यापकताज्ञानहेतुतावादिमते । ३ व्याप्तिविशिष्टहेतुप्रकारकपक्षविशेष्यक परामर्शस्य = वह्निनिरूपितव्याप्तिविशिष्टवह्निव्याप्य धूमवान् नित्याकारकपरामर्शस्य । ४ एतादृशं = सामग्री (प्रतिबन्धत्वाकल्पनप्रयुक्तं । ५ तादृशज्ञानसत्वे = व्याप्तिविशिष्टहेतु प्रकारकपक्षविशेष्यकपरामर्शात्मकज्ञानसत्त्वे । ६ तद्बाहुल्य = कार्यकारणभावबाहुल्य ।

र्शस्य चेत्कारणताऽभ्युपगम्यते तदैवोपदर्शित[1]गौरवावकाशः ।

वयन्तु साध्याभाववदवृत्तित्वविशिष्टहेतुमत्ताज्ञानत्वेनैव हेतुतां स्वीकरिष्यामः । न च तत्र[2] किमपि गौरवं सम्भवतीति प्रत्युत व्यापकत्वापेक्षयासाध्याभाववदवृत्तित्वस्य लघुशरीरतया लाघवमेवेति ।

वस्तुतस्तु अभावप्रत्ययो हि यादृशविशिष्टधर्मस्य प्रतियोगितावच्छेदकत्वमवगाहते तादृशविशिष्टधर्म एव प्रतियोगिनिष्ठविशेषणतायामवच्छेदकतया तत्र भासते, शुद्धघटत्वादिषु प्रतियोगितावच्छेदकत्वावगाहिनो नीलघटत्वावच्छिन्नप्रतियोगिनिष्टविशेषणताकाभावप्रत्ययस्याप्रामाणिकत्वात् । अन्यथा विशेषदर्शिनापि प्रमेयं नास्तीति प्रतीत्यापत्तेः ।

धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वनिष्टप्रतियोगिकत्वावगाहिपर्वतीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नविशेषणताकज्ञानमेवासिद्धमिति, पर्वतीयत्वघटिततादृशधर्मनिष्ठप्रतियोगितावच्छेदकत्वावगाहिपरामर्शस्यैव हेतुत्वं स्वीकरणीयम् । तथा च[3] उपदर्शितस्थले[4]ऽनुमित्यपलापो दुर्वार एवेति, व्याप्तिविशिष्टहेतुमत्तापरामर्शहेतुतामतमेवसाधीयः ।

साध्याभाववदवृत्तित्वरूपव्याप्तेरनुमितिहेतुत्वेपि न केवलान्वयिस्थले दोषः ।

नव्यास्तु साध्यभाववदवृत्तित्वरूपाव्याप्तिरनुमितिप्रयोजिका, व्यापकसामानाधिकरण्यरूपव्याप्तेः सामानाधिकरण्यघटितत्वेन गुरुशरीरत्वात् ।

केवलान्वयिस्थले[5]साध्याभावस्याऽप्रसिद्धत्वेपि अभावांशेसाध्यीयत्वावगाहिनो भ्रमात्मकज्ञानादेवानुमितिरुपेयते । न च साध्येऽभावाप्रतियोकत्वरूपकेवलान्वयित्वग्रहदशायामभावे साध्यप्रतियोगिकत्वरूपभ्रमासम्भवादनुमित्यपलापप्रसङ्ग इति वाच्यम् ।

---

१ उपदर्शित = हेतुतावच्छेदकभेदेनकार्यकारणभावप्रयुक्त । २ तत्र = साध्यभाववदवृत्तित्वविशिष्टहेतुमत्ताज्ञानत्वेनकारणतायां । ३ तथाच = तादृशपरामर्शस्यकारतास्वीकारे च । ४ उपदर्शितस्थले = यादृशस्थले पर्वतीयधूमत्वावच्छिन्न निरूपितव्यापकतानवह्नौ गृहीतातादृशस्थले । ५ केवलान्वयिस्थले = वाच्यम् ज्ञेयत्वादित्यादौ ।

असमानाकारकज्ञानस्याप्रतिबन्धकतया अभावांशे प्रतियोगितासंसर्गेणसाध्य प्रकारकत्वधियः उपदर्शितकेवलान्वयित्वज्ञानाप्रतिवध्यत्वात्[1]। अथ तथापि अभावो न साध्यीय इत्याकारकाभावत्वावच्छिन्नधर्मिकप्रतियोगितासंसर्गावच्छिन्नप्रतियोगिताकसाध्याभाववत्तानिर्णयदशायां साध्याभाववदवृत्तिमानपक्ष इत्येतादृशपरामर्शासम्भवादनुमित्यनुपपत्तिर्दुर्वारैवेति चेत्, नेष्यत एव तत्रा[2]नुमितिः।

द्रव्यं बिशिष्ट सत्वादित्यादावपिभ्रभात्मककज्ञानादेवानुमिति ः

एवं विशिष्टसत्ताया सत्तानतिरेकतया[3] द्रव्यत्वाभाव वदवृत्तित्वविरहात्तद्धेतुक[4] द्रव्यत्वादिनिरूपितव्याप्तिज्ञानस्य प्रमात्वविरहेपि न[5] क्षतिः, तत्रापि[6] भ्रभात्मकपरामर्शादेवानुमितेरुपपत्तेः।

एवञ्च[7] जातिमान् सत्वादित्यादावपि भ्रभात्मकपरामर्शादेवानुमितिरुपपत्तेः अतस्तत्र[8]साध्याभाववतिसामान्यदौहेतुतावच्छेदककीभूतसमवायसम्बन्धेनवृत्तेरप्रसिद्धे स्तदभावरूपव्याप्तेर प्रसिद्धावपिनक्षतिः[9]।

एवमवृत्तिगगनादौसाध्याभाववदवृत्तित्वरूपव्याप्तिसत्वेपि विशेषदर्शिनां पक्षधर्मताज्ञानविरहादेव नानुमितिः यदि च गगनमवृत्तीत्याकारकविशेषदर्शनकालेपिपक्षविशेष्यकतादृशगगनादिप्रकारकसाध्याभाववदवृत्तिगगनवान् - पक्ष इत्येतादृश परामर्शोत्यन्तोबाधकाभावः, अवृत्तित्वग्रहस्य वृत्तित्वग्रहं प्रत्येव ग्राह्याभावावगाहितया बिरोधित्वेन तादृशपरामर्शं[10] प्रति तस्य[11] विरोधित्वेमानाभाव

१ उपदर्शित केवलावयि = साध्येऽभावा प्रतियोगित्वरूपकेवलान्ययि । २ तत्र = परामर्शासम्भवकाले केवलान्वयिस्थले । ३ नतिरंकत्या = विशिष्टं शुद्धान्नतिरिच्यत इति नियमेनाभिन्नतया । ४ तद्धेतुक = विशिष्टसत्वहेतुक । ५ नक्षतिः = तानुमितेरनुपपत्तिः । ६ तत्रापि = द्रव्यंविशिष्टसत्वादित्यादावपि । ७ एवञ्च = भ्रभात्मक परामर्शादनुमितिस्वीकारे च । ८ तत्र = जातिमान्सत्वादित्यत्र । ९ नक्षतिः = नानुमित्यनुपत्तिः । १० तादृशपरामर्श = साध्यायावबदवृत्तिगमनवान्पर्वतइत्याकारक परामर्शं । ११ तस्य = अवृत्तित्वग्रहस्य ।

इति विभाव्यते तदा तत्रानुमित्यभावस्य[1] प्रामाणिकत्वे साध्याभाववृत्तित्वविशिष्ट-वृत्तिमत्त्वमित्येव व्याप्तिरिति स्वीकरणीयम्, तादृश[2]व्याप्तिग्रहेऽवृत्तित्वग्रहस्य विरोधित्वे न कस्यापि विप्रतिपत्तिः ।

वस्तुतस्तु तद्वत्ता[3]ग्रहं प्रति तद्धर्मिका[4]वृत्तित्वग्रहस्यापि विरोधित्वमनेक-ग्रन्थकारसम्मतं सयुक्तिकञ्च । तत्[5]कल्पने च पर्वतो वह्निमानित्येतादृशानुमितौ वह्निरवृत्तिरित्याकारकविशेषणतावच्छेदकप्रकारकनिर्णयघटिताया इच्छा-विशिष्टाया अवृत्तिवह्निमानित्याकारकविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवसम्भवात् । तथा च गगनमवृत्तीत्याकारकतादृश-ज्ञानकाले गगनादिप्रकारकज्ञानमपि नोत्पद्यत एवेति वदन्ति ।

व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानमेवानुमितिहेतुः—

अत्रेदं चिन्त्यं, व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्यैव हेतुत्व-मुचितं, तथा सति तादृशज्ञानप्रतिबध्येऽभावो न हेतुसमानाधिकरणः, प्रतियो-गितानाभावीयेत्याकारकोपनीतभानशाब्दबोधादावनुमितिसामग्र्याः प्रतिबन्धक-त्वाकल्पनेन लाघवसम्भवात् । अनुमितिसामग्रीकाले बाधमुद्रया तादृश[6]ज्ञानं प्रति क्लृप्तप्रतिबन्धकताकस्य स्वव्यापकसाध्यसामानाधिकरण्यनिर्णयस्य तत्र[7] स-त्त्वात्, तत एव तादृ[8]शोपनीतभानवारणोपपत्तेः ।

साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्य हेतुतामते तत्प्रतिबध्यी-भूताभावो न साध्यीय इत्येतादृशोपनीतभानं प्रति अनुमितिसामग्र्याः प्रति-बन्धकत्वाकल्पेन लाघवसम्भवात् साम्यमिति वाच्यं; यतो गुरुशरीरव्या-प्तिज्ञानप्रतिबध्यानां लघुशरीरव्याप्तिज्ञानप्रतिबध्यज्ञानापेक्षया बहुविधतया

---

१ तत्र = वह्निमान् गगनादित्यत्र । २ तादृश = साध्याभाववदवृत्तित्वविशिष्टवृत्तिमत्त्वरूप । ३ तद्वता = वह्न्यादिमत्ता । ४ तद्धर्मिक = वह्न्यादिधर्मिक । ५ तत् = विरोधित्वं । ६ तादृश = अभावो न हेतुसमानाधिकरण इत्याद्याकारक । ७ तत्र = तादृशज्ञानकाले । ८ तादृश = अभावो न हेतुसमानाधिकरणः प्रतियोगितानाभावीयेत्याकारक ।

गुरुशरीरव्याप्तिज्ञानहेतुतामतेऽनेकविधज्ञानेऽनुमितिसामग्रीप्रतिबन्धकता, लघुशरीरव्याप्तिज्ञानहेतुतामते तु स्वल्पस्थले तथेति[1] कारणीभूतज्ञानविषयस्य शरीरगौरवमेव लाघवसम्पादकमिति ।

व्यापकसामानाधिकरण्यरूपव्याप्तेःकारणत्वे गौरवम् :—

अथ मास्तु व्याप्तेः शरीरगौरवकृतगौरवं, एवमपि[2] व्यापकसामानाधिकरण्यरूपव्याप्तेः हेतुतावच्छेदकघटिततया हेतुतावच्छेदकभेदेन परामर्शे हेतुताया अनुमितिसामग्रीप्रतिबन्धकतायाश्चानन्त्यप्रयुक्तगौरवं दुर्वारमेव । साध्याभाववदवृत्तित्वरूपव्याप्तेः हेतुतावच्छेदकविषयतामनिवेश्य, वह्निव्याप्यधूमवान् वह्निव्याप्यालोकवांश्च पर्वत इत्याकारकबहुविधपरामर्शानां साध्याभाववदवृत्तित्वावच्छिन्नप्रकारताकनिर्णयत्वेनैकहेतुताया एव सम्भवात, तादृश[3]व्याप्तिज्ञानहेतुतावादिमते हेतुतावच्छेदकभेदेन परामर्शहेतुताबाहुल्यम् ।

न च व्यापकसामानाधिकरण्यज्ञानहेतुतामतेऽपि हेतुविषयताया विशिष्यधूमत्वावच्छिन्नविषयतात्वेन निवेशे एतन्मतेऽपि[4] हेतुतावच्छेदकभेदेन परामर्शहेतुताया बाहुल्यं, तदेव[5] कुतः सामान्यतोऽवच्छिन्नविषयतात्वेन हेतुविषयतानिवेशनेऽप्युपपत्तेरिति वाच्यं,हेतुविषयताया विशिष्यधूमत्वाद्यवच्छिन्नविषयतात्वेनानिवेशे आलोकव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिनिर्णयवारणासम्भवात् तन्निवेशस्यावश्यकत्वादिति चेत् न हेतुतावच्छेदकविशिष्यानिवेश्यधूमालोकादिसाधारणनिश्चयत्वस्य दुर्वचतया साध्याभाववदवृत्तित्वव्याप्तिज्ञानहेतुतामतेऽपि हेतुतावच्छेदकभेदेन परामर्शहेतुतादिबाहुल्यमावश्यकमेव, तथा हि वह्निव्याप्यप्रतियोगिकाभावाप्रकारकत्वे सति वह्निव्याप्यप्रकारकज्ञानत्वं न निर्णयत्वम, वह्निव्याप्यालोकवान्न वा पर्वतः पर्वतो वह्निव्याप्यधूमवानित्येतादृशांशिकनिर्णयाव्यापनात्[6] । नापि वह्निव्याप्यत्वावच्छिन्नसामान्याभावाप्रका-

---

१ तथा = प्रतिबन्धकता । २ एवमपि = शरीरगौरवकृतगौरवाभावेऽपि । ३ तादृश = व्यापकसामानाधिकरण्यरूप । ४ एतन्मतेपि = व्यापकसामानाधिकरण्यरूपव्याप्तेः कारणतावादिमतेऽपि । ५ तदेव = बाहुल्यमेव । ३ अव्यापनात् = आंशिकनिश्चये वह्निव्याप्यप्रतियोगिकाभावप्रकारकत्वसत्वेन तदभावाप्रकारकत्वे सति वह्निव्याप्यप्रकारकज्ञानत्वाभावात् ।

रकत्वे[1] सति तदवच्छिन्नप्रकारकत्वं, वह्निव्याप्यधूमवान्न वा पर्वत इत्येतादृश-बोधस्यापि तादृश[2]सामान्याभावाप्रकारकज्ञानत्वेन तथात्व[3]प्रसङ्गात् । तादृश[4]-सामान्याभावाप्रकारकत्वे सति शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारकत्वनिवेशे च, वह्निव्याप्यधूमवान् पर्वत इत्यादिनिश्चयस्याप्यसंग्रहः, तादृश[5]ज्ञानीयधूमत्वाव-च्छिन्नवह्निव्याप्यप्रकारतया केवलवह्निव्याप्यत्वावच्छिन्नत्वविरहात् ।

न च तादृश[6]निर्णये फलानुरोधेन वह्निव्याप्यवान् पर्वत इत्यादिनिर्णय-साधारणीशुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारतापि स्वीक्रियते अतो न तदसङ्ग्रहः[7]। तादृशज्ञानीयवह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशये च तादृशप्रकार[8]-तायाः कल्पनाभावान्नातिप्रसङ्गः ।

यत्र संशये[9] तादृश्यपि[10] प्रकारता प्रामाणिकी तत्र तावत् वह्निव्याप्य-धूमवान्न वा पर्वतः पर्वतो वह्निव्याप्यवानित्याकारक एवानुमित्यादिजनकत्वे न केनचिदपि विप्रतिपद्यत इति वाच्यम् । वह्निव्याप्यधूमवान् पर्वत इत्यादि-निखिलनिर्णये शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारताया अनुभवविरुद्धत्वात्, फलानुरोधेन तत्स्वीकारे[11] सर्वेषां तथाविधनिर्णयानां वह्निव्याप्यधूमवान् वह्नि-व्याप्यवांश्च पर्वत इत्याकारकताप्रसङ्गात् ।

वस्तुतः शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारताया वह्निव्याप्यधूमवान्न-वा पर्वत इत्याकारकसंशयसाधारण्यवारणाय तत्राननुगतनियामकाभाव-कल्पनमावश्यकम् । एवञ्चोपदर्शित[12]निर्णयेषु तदभ्युपगमे[13] तत्तन्निर्णयोत्पादका-

---

१ तदवच्छिन्न = वह्निव्याप्यत्वावच्छिन्न । २ तादृश = वह्निव्याप्यत्वावच्छिन्न । ३ तथात्व = निश्चयत्व । ४ तादृश = वह्निव्याप्यत्वावच्छिन्न । ५ तादृश = वह्निव्याप्यधूमवान् पर्वत । ६ तादृश = वह्निव्याप्यधूमवान् पर्वत इति । ७ तदसङ्ग्रहः = वह्निव्याप्याधूमवान् पर्वत इति ज्ञानस्यासङ्ग्रहः । ८ तादृशप्रकारता = शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारता । ९ यत्र संशये = यादृशसंशयविशेषे । १० तादृशी = शुद्धवह्निव्याप्यत्वावच्छिन्ना । ११ तत्स्वीकारे = शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारतास्वीकारे । १२ उपदर्शित = आंशिक । १३ तदभ्युपगमे = शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारतास्वीकारे ।

नामननुगतहेतूनान्तादृशविषयताप्रयोजनकत्वकल्पने[1] महागौरवम् । एवञ्च विरोधिसामग्रीकालीनस्य वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्येन्तादृशेच्छाजन्यस्य वह्निव्याप्यधूमवान् पर्वत इति ज्ञानस्य शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारकत्वाभावेनानुमित्यजनकत्वापत्तिः ।

न च शुद्धवह्निव्याप्यत्वावच्छिन्नप्रकारकत्वमपि तत्रेति वाच्यम्, स्वेच्छाविरहविशिष्टविरोधिसामग्र्याः प्रतिबन्धकत्वात् । न च पूर्वोपदर्शितानामपीच्छानामत्रोत्तेजकत्वात्[2] न तादृशेच्छाकालीननिर्णयस्य[3] शुद्धव्याप्यत्वावच्छिन्नप्रकारताशालित्वापत्तिरिति वाच्यम् । तथा सति तादृशेच्छाभावैस्सह वह्निव्याप्यत्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्येतादृशेच्छाभावस्य विशेष्यविशेषणभावेन विनिगमनाविरहात् प्रतिबन्धकताबाहुल्यप्रसङ्गः, तादृशेच्छाकाले धूमादिभासकसामग्र्यसत्वे विरोधिसामग्रीदशायां वह्निव्याप्यवान् पर्वत इत्याकारकज्ञानापत्तेश्च ।

अथ पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतान्या या पर्वतत्वावच्छिन्नविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारता तच्छालित्वमेव पर्वतत्वावच्छिन्नधर्मिकव्याप्यवत्तानिर्णयत्वं, प्रकारता च प्रकारतावच्छेदकभेदात् प्रकारभेदाद्भिद्यते न तु विशेष्यादिभेदादपि मानाभावात् । एवञ्च[4] वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयीयपर्वतविशेष्यतानिरूपितधूमप्रकारतायां तादृशाभावप्रकारतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारत्वाभिन्नतया नातिप्रसङ्गः, वह्निव्याप्यालोकवान्न वा पर्वतो वह्निव्याप्यधूमवान् पर्वत इत्यादिसमूहालम्बने च तथाविधधूमप्रकारताया अभावविशेष्यतानिरूपितालोकादिप्रकारताभिन्नत्वान्न तदसङ्ग्रहः[5] । यत्तु

---

१ तादृश = शुद्धवह्निव्याप्यत्वावच्छिन्न । २ पूर्वोपदर्शित = विरोधिसामग्रीकालीनवह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकप्रत्यक्षं जयतामिति पुरः उदीरित । ३ तादृशेच्छा = विरोधिसामग्रीकालीनवह्निव्याप्यधूमत्वावच्छिन्नप्रकारताकप्रत्यक्षं जायतामित्याकारिकेच्छा । ४ एवञ्च = पर्वतत्वावच्छिन्नधर्मिकव्याप्यवत्तानिर्णयस्य तादृशीया परिष्कारकरणे च । ५ तदसङ्ग्रहः = समूहालम्बनज्ञानस्यासङ्ग्रहः ।

वह्निव्याप्यधूमवान्नवेत्यादिसंशयेऽपि पक्षविशेष्यतानिरूपितसंयोगादिसंसर्गावच्छिन्नप्रकारताया अभावविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतातो भेद आवश्यकः, तदभेदे[1] तादृशज्ञानस्य[2] पर्वतविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारताशालित्वात् तस्य[3] प्रतियोगितासंसर्गावच्छिन्नप्रतियोगिताकधूमाभावप्रकारकपर्वतविशेष्यकपर्वतो न धूमीय इत्याकारकबाधप्रतिबध्यत्वप्रसङ्गः, तादृशधूमप्रकारतायाः तथाविधबाधादि[4]प्रतिबध्यतावच्छेदकत्वादिति तन्न, पर्वतविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नधूमप्रकारताकबुद्धित्वं न तथाविधबाधप्रतिबध्यतावच्छेदकम्, अपि तु पर्वतविशेष्यतानिरूपितप्रतियोगित्वसांसर्गिकविषयत्वावच्छिन्नधूमप्रकारताकबुद्धित्वमुपदर्शित[5]संशये च प्रतियोगित्वसंसर्गावच्छिन्नप्रकारतायाः पर्वतनिष्ठविशेष्यतानिरूपितत्वेऽपि तादृश[6]प्रकारतानिरूपितप्रतियोगित्वसांसर्गिकविषयतायां न पर्वतविशेष्यतानिरूप्यत्वं किन्तु संयोगीयसांसर्गिकविषयताया एव, अतो नास्य[7]ोपदर्शित[8]बाधप्रतिबध्यतावच्छेदकाक्रान्तत्वमिति तत्र प्रकारतैक्यं निराबाधमेवेति चेत्, मैवम् वह्निव्याप्यधूमवान् वह्निव्याप्यधूमाभाववान् पर्वत इत्येतादृशसंशये पर्वतविशेष्यतानिरूपितधूमप्रकारतायां स्वावच्छेदकतासमनियतावच्छेदकता (का) भावविषयतानिरूपितधूमप्रकारत्वाभेदोक्तिसम्भवेऽपि वह्निव्याप्यधूमवान् धूमाभाववानित्येतादृशसंशयीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्निव्याप्यधूमत्वावच्छिन्नप्रकारतायामभावविशेष्यतानिरूपितशुद्धधूमत्वावच्छिन्नप्रकारत्वाभेदोक्तिः न सम्भवति, तथा सति[9] वह्निव्याप्यधूमवान् वह्निव्याप्यधूमाभाववान् पर्वत इत्येतादृशसंशयात्तद्वैलक्षण्यप्रसङ्गात्,

---

१ तदभेदे = पक्षविशेष्यतानिरूपितसंयोगादिसंसर्गावच्छिन्नप्रकारताया अभावविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतायाश्चाभेदे । २ तादृशज्ञानस्य = वह्निव्याप्यधूमवान्नवेत्यादिसंशयाकारकज्ञानस्य । ३ तस्य = तादृशसंशयात्मकज्ञानस्य । ४ तथाविधबाध = पर्वतो न धूमीय इत्याकारकबाध । ५ उपदर्शित = वह्निव्याप्यधूमवान्नवेत्यादि । ६ तादृश = प्रतियोगित्वसम्बन्धावच्छिन्न । ७ अस्य = वह्निव्याप्यधूमवान्नवेति संशयस्य । ८ उपदर्शित = प्रतियोगित्वसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावप्रकारकपर्वतविशेष्यकपर्वतो न धूमीय इत्याकारक । ९ तथा सति = अभेदे सति ।

तथा च तादृशसंशयसाधारण्यमुपदर्शितनिर्णयत्वस्य दुर्वचत्वमेव ।

अथ तादृश[1]संशयेऽपि पर्वतविशेष्यतानिरूपितधूमप्रकारताऽभावविशेष्यतानिरूपितधूमप्रकारतयोरभेदः स्वीक्रियते । नचोपदर्शितसंशयात्तद्वैलक्षण्यप्रसङ्गः, तत्रोपदर्शितसंशये अभावविशेष्यतानिरूपितधूमप्रकारताया वह्निव्याप्यत्वविशिष्टधूमप्रकारतात्वेन निरूप्यनिरूपकभावः तादृश[2]संशये च केवलधूमप्रकारतात्वेनेति प्रकारताविशेष्यतयोर्निरूप्यनिरूपकभाववैलक्षण्यादेव तद्वैलक्षण्य[3]मुपपद्यत इति चेत्, एवं सति वह्निव्याप्यनीलधूमाभाववान् पर्वतो वह्निव्याप्यधूमवांश्चेत्येतादृशसमुच्चयीयतथाविधप्रकारतयोर्भेदोऽसिद्धः तद्बीजस्य वह्निव्याप्यनीलवान्नवा पर्वत इत्येतादृशसंशयात्तादृशसमुच्चयवैलक्षण्यस्य तदभेदे[4]ऽपि उक्तरीत्योपपादयितुं शक्यत्वात् तथा च तादृशसमुच्चयादप्यनुमित्यनुदयप्रसङ्गः ।

यत्तु संशये भावाभावोभयप्रकारतानिरूपिता विशेष्यता एकैव समुच्चये तु प्रकारताभेदेन विशेष्यताभेदः । एवञ्च व्याप्यप्रतियोगिकाभावप्रकारत्वानिरूपितव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकज्ञानत्वमेव व्याप्यनिर्णयत्वमिति, तदप्यसत् । वह्निव्याप्यधूमवह्निव्याप्यालोकाभावादिकमेकत्र द्वयमिति रीत्या पक्षांशेऽवगाहमानस्य ज्ञानस्या[5]पि तादृशधूमालोकाभावादिप्रकारतानिरूपितैकविशेष्यताकतया तदसङ्ग्रहप्रसङ्गात्, तत्र विशेष्यताभेदे समूहालम्बनाकार (क) वह्निव्याप्यधूमवान् पर्वत आलोकाभाववान् पर्वत इत्येतादृशनिर्णयज्ञानात् वह्निव्याप्यधूमवान् पर्वत आलोकाभाववानित्येतादृशस्यैकत्र द्वयमिति रीत्या धूमालोकाभावादिप्रकारताकतादृशज्ञानस्यावैलक्षण्यप्रसङ्गात् । क्वचित्तु स्वा[6]वच्छेदकावच्छिन्नत्वस्वनिरूपकज्ञाननिरूपितत्वैतदुभयसम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावविषयतानिरूपितप्रतियोगित्वप्रकारताविशिष्टान्या या पर्वतत्वावच्छिन्नविशेष्यतानिरूपितव्याप्यत्वा-

---

१ तादृश = वह्निव्याप्यधूमवान्न वेत्येतादृश । २ तादृश = वह्निव्याप्यधूमवान् धूमाभाववानित्येतादृश । ३ तद्वैलक्षण्यं = संशयवैलक्षण्यं । ४ तदभेदेऽपि = प्रकारत्वयोरभेदेऽपि । ५ ज्ञानस्य = वह्निव्याप्यधूमवान् वह्निव्याप्यालोकाभाववांश्च पर्वत इति ज्ञानस्य । ६ स्वं = प्रकारता

वच्छिन्नप्रकारतातन्निरूपितज्ञानत्वमेव प्रकृतनिर्णयत्वम । वह्निव्याप्यालोकाभाववान् वह्निव्याप्यधूमवांश्च पर्वत इत्येतादृशज्ञानीयपक्षविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारतोप[१]दर्शितोभयसम्बन्धेन कदाचिदपि तादृशाभाव[२]विशेष्यतानिरूपितप्रतियोगित्वप्रकारताविशिष्टा, तादृश[३]ज्ञानीयतथाविधालोकप्रकारतायास्तत्र[४] स्वावच्छेदकावच्छिन्नत्वविरहात्, अन्यज्ञानीयतथाविधधूमत्वावच्छिन्नप्रकारतायाश्च स्वनिरूपकज्ञाननिरूपितत्वविरहात् । वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशये पक्षविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारता चोक्तो[५]भयसम्बन्धेन तादृश[६]ज्ञानीयाभावविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नप्रकारताविशिष्टैव नातस्तदसङ्ग्रहः[७] । सम्बन्धघटकदलद्वयप्रयोजनन्तु स्फुटमेव ।

स्वावच्छेदकावच्छिन्नत्वञ्च स्वावच्छेदकताव्यापकतावच्छेदकतावत्त्वमतो वह्निव्याप्यालोकाभाववान् वह्निव्याप्यधूमवांश्च पर्वत इत्येतादृशज्ञानीयपक्षविशेष्यतानिरूपितधूमप्रकारतायास्तज्ज्ञानीयाभावविशेष्यतानिरूपितालोकनिष्ठप्रकारतावच्छेदकीभूतव्याप्यत्वावच्छिन्नत्वेऽपि न क्षतिः । आलोकत्वसाधारणीं तादृशावच्छेदकतां प्रति तादृशधूमप्रकारतावच्छेदकताया अव्यापकत्वात्, स्वावच्छेदकताव्यापकतावच्छेदकतावत्त्वघटितोभयसम्बन्धेन तत्र तद्वैशिष्ट्याभावादिति वदन्ति, तदप्यसिद्धम् तथा सति[८] जातिविशेषत्वादिना यत्राभावप्रतियोग्यंशे धूमत्वादिकं विशेषणतया जातं तत्र वह्निव्याप्यधूमवान् पर्वतो जातिविशेषवदभाववांश्चेत्याकारकतादृशज्ञानादप्यनुमित्यनुदयापत्तेः, धूममात्रवृत्त्यभावविशेष्यतानिरूपितज्ञानीयप्रकारतावच्छेदकतां प्रति पर्वतविशेष्यतानिरूपितधूमप्रकारतावच्छेदकताया व्यापकत्वात् ।

---

१ उपदर्शित = स्वावच्छेदकावच्छिन्नत्वस्वनिरूपकज्ञाननिरूपितत्व । २ तादृशाभाव = वह्निव्याप्यालोकाभाव । ३ तादृश = वह्निव्याप्यालोकाभाववान् वह्निव्याप्यधूमवांश्चेतादृश । ४ तत्र = ज्ञाने । ५ उक्तोभय = स्वावच्छेदकावच्छिन्नत्व, स्वनिरूपकज्ञाननिरूपितत्वोभय । ६ तादृश = वह्निव्याप्यधूमवान्न वा पर्वत इत्येतादृश । ७ तदसङ्ग्रह = तादृशज्ञानासङ्ग्रहः । ८ तथा सति = उक्तोभयसम्बन्धेन तद्वैशिष्ट्यघटितनिश्चयत्वनिवेशे सति ।

एवम्, ज्ञानव्यक्तिभेदेन विषयताभेदस्याप्रामाणिकतया वह्निव्याप्य-धूमवान् पर्वत इत्याकारकज्ञानीयव्याप्यप्रकारतायाः संशयात्मकज्ञानीयाभावविशेष्यतानिरूपितप्रकारताविशिष्टप्रकारत्वाभिन्नत्वात्, ताद्दश[1]प्रकारताविशिष्टान्य-व्याप्यप्रकारताया असिद्धेरिति न किञ्चिदेतत् । केचित्तु विरोधानवच्छिन्न-संयोगादिनिष्ठसांसर्गिकविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नप्रकारताकज्ञान-त्वमेव निश्चयत्वम् ।

संशयीयसंयोगादिनिष्ठसांसर्गिकविषयताया विरोधावच्छिन्नत्वात् तद्[2]व्यावृत्तिः ।

निश्चये क्वचिदपि विरोधस्य संसर्गकोटिविषयतायां भानानुपगमान्न दोषः[3] ।

न च हेतुतावच्छेदकघटितस्य वह्निव्याप्यधूमाभाववदवृत्तित्वादिरूप-विरोधस्य निवेशे हेतुतावच्छेदकभेदेन परामर्शकारणत्वादिभेद आवश्यकः, वह्निव्याप्यत्वावच्छिन्नाभाववदवृत्तित्व (रूप) विरोधानवच्छिन्नत्वस्य सांसर्गिक-विषयतायां निवेशे च पर्वतो वह्निव्याप्यधूमवान्नवेत्येतादृशसंशयवारणासम्भवः, तत्र[4] नियमतो वह्निव्याप्यत्वावच्छिन्नाभावस्याकोटितया[5] तदधिकरणावृत्तित्व-रूपविरोधस्याभानादिति वाच्यं, वह्निव्याप्यप्रतियोगिकाभावत्वावच्छिन्नावच्छे-दकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतात्वेन नि-खिलविरोधनिष्ठावच्छेदकतामनुगमय्य तदनिरूपकत्वस्यैव संसर्गविषयतायां निवेशेऽनुपपत्त्यभावादिति ।

न चैवम्, वह्निव्याप्यालोकाभावाधिकरणावृत्तित्वावच्छिन्नसंयोगा-दिसंसर्गकधूमादिनिश्चयासङ्ग्रह इति वाच्यं, धूमवत्वादिज्ञाने आलोकाद्यभाववद-वृत्तित्वादेस्संसर्गतया भाने मानाभावादित्याहुः, तदप्यसत्, विरोधानवच्छिन्न-संयोगादिनिष्ठसांसर्गिकविषयताकत्वनिवेशेऽपि यत्र संशयेऽभावकोटावेव संसर्ग-

---

१ = ताद्दश = संशयात्मकज्ञानीयाभावविशेष्यतानिरूपित । २ तत् = संशय । ३ न दोषः = न निश्चयासंग्रहः । ४ तत्र = संशये । ५ अकोटितया = संशयघटककोटिद्वयानाक्रान्ततया ।

घटकतया विरोधिधूमादिविरोधस्य भानं न तु धूमादेस्तादृशसंशयवारणासम्भवात् ।

न च सर्वत्र संशये प्रतियोगिकोटिसंसर्गांश एव विरोधो[1] भासत इति वाच्यम् । विरोधावच्छिन्नसंयोगादिनिष्ठसंसर्गताकबुद्धिप्रतिबन्धकविशिष्टसंसर्गावच्छिन्नप्रतियोगिताकधूमाभावावगाहिबाधकालीनसंशये विरोधावच्छिन्नसंयोगादिना धूमस्य भानासम्भवात् । न च तदानीं[2] संशय एव नोत्पद्यत इति वाच्यं, शुद्धसंयोगविरोधावच्छिन्नविशेषणत्वाभ्यां धूमतदभावोभयकोटिकसंशयोत्पत्तौ बाधकाभावात् । एवम् विरोधावच्छिन्नसंयोगादिसंसर्गकप्रत्यक्षकाले शुद्धसंयोगादिपर्याप्तसांसर्गिकविषयताशालित्वेऽपि बाधकाभावः, तादृश[3]विषयतानियामकबाधाभावादिघटितसामग्र्याः तदव्यवहितप्राक्काले ऽपि सत्वात् ।

एवम्, संशयस्यापि विरोधानवच्छिन्नसंयोगादिनिष्ठसांसर्गिकविषयताशालितयोपदर्शितप्रणाल्या अपि संशयव्यावर्त्तनमशक्यं बोध्यम् ।

न च शुद्धसंयोगादिपर्याप्तसांसर्गिकविषयताकबुद्धिं प्रति विरोधावच्छिन्नसंयोगादिसंसर्गकनिश्चयसामग्र्याः प्रतिबन्धकत्वं कल्पयित्वा संशयस्य तादृशविषयताशालित्वं वारणीयमिति वाच्यम् । तथा विधानन्तसामग्रीप्रतिबन्धकताकल्पनेन गौरवात्, एवञ्च विरोधस्य संसर्गतयाभानेऽपि भूयसां विवादः ।

न च संशयस्य समुच्चयवैलक्षण्योपपत्तये तत्रा[4]वश्यं विरोधित्वमङ्गीकरणीयम्, तत्र विरोधानुपस्थितिकालीनसंशये विरोधस्य प्रकारतया भानं न सम्भवति विशेषणज्ञानविरहात् अतो विरोधस्य संसर्गतासिद्धिरिति वाच्यम् । तत्र विरोधानुपस्थितिदशायां संशयस्याप्रमाणिकतया विरोधस्य प्रकारतामुपन्नस्यैव संशयसमुच्चयवैलक्षण्योपपादनसम्भवात् ।

न च धूमालोकादिसाधारणनिश्चयत्वनिर्वचनान्यथानुपपत्तिबलादेव विरोधस्य संसर्गताङ्कल्पयिष्याम इति वाच्यं, निर्वचनाशक्यत्वेऽपि हेतुता-

---

१ तत् = विरोधनिष्ठावच्छेदकता । २ तदानीं = बाधादिकाले । ३ तादृश = संयोगादिपर्याप्तसांसर्गिकविषयता । ४ तत्र समुच्चये ।

वच्छेदकभेदेन[1] परामर्शस्यानुमितिहेतुतासम्भवात्, तदनुपतत्तेरकिञ्चित्करत्वात्; न चैवं कार्यकारणभावानन्त्यगौरवमिति लाघवात् विरोधस्य संसर्गतासिद्धिरिति वाच्यम्, कार्यकारणभावलाघवादतिरिक्तविषयतासिद्धेः प्रतिबन्दिसहस्रकवलितत्वादित्यलमसदावेशेन ।

एवम्, हेतुतावच्छेदकविशेषघटितधूमाभाववद्विशेष्यतानिरूपितप्रकारताकत्वादिरूपनानाविधाप्रामाण्यग्रहाभावानां पृथक्निवेशानुरोधेनापि धूमत्वालोकत्वादिभेदेन परामर्शहेतुतावच्छेदकभेद आवश्यकः, निखिलपरामर्शानामेकरूपेण हेतुत्वे तथाविध[2]निखिलाप्रामाण्यग्रहाभावानामेकत्र निवेशप्रसङ्गात् । नचाप्रामाण्यग्रहाभावानामनुमितिजनकत्व एव नेयमनुपपत्तिः, तत्र तत्र[3] पृथक्कारणत्वमिति तन्मत[4] एवावलम्बनीयमिति वाच्यम् ।

अप्रामाण्यग्रहाभावस्य हेतुतामतेऽपि हेतुतावच्छेदकभेदेन परामर्शस्य हेतुताया आवश्यकत्वात्, अन्यथा धूमाभाववति धूमप्रकार(क)त्वादिरूपभ्रमत्वरूपग्रहकालेऽपि धूमादिपरामर्शादनुमित्यापत्तिसम्भवात् । तथा हि तन्मते[5] आलोकादिपरामर्शकाले धूमाभाववति धूमप्रकारत्वादिरूपाप्रामाण्यग्रहकाले (सत्त्वे) अनुमित्युत्पादप्रयोजिकाया अन्यविधाप्रामाण्यग्रहाभाववह्निव्याप्यत्वावच्छिन्नप्रकारकनिर्णयप्रभृतिकारणस्तोमात्मकसामग्र्या अक्षतत्वात् । तवा[6]लोकादिपरामर्शत्वस्य जनकतानवच्छेदकतया तदवच्छिन्नविरहस्य सामग्रीविरहासम्पादकत्वादिति ।

अथ धूमप्रकारत्वादिघटिताप्रामाण्यग्रहानां (णां) स्वीयधूमाभाववद्विशेष्यतानिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतधूमप्रकारतात्वादिसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभावा अनुमितिजनकतावच्छेदकीभूततद्व्याप्यप्रकारतायां निवेश्यन्ते ।

---

१ हेतुतावच्छेदकभेदेन = धूमत्वद्रव्यत्वादिभेदेन । २ तथाविध = हेतुतावच्छेदकविशेषघटितधूमाभाववद्विशेष्यतानिरूपितप्रकारताकत्वादिरूप । ३ तत्र तत्र = अप्रामाण्यग्र.नाभावे परामर्शे च । ४ तन्मते = पृथक्पृथक्कारणतावादिमते । ५ तन्मते = अप्रामाण्यग्रहाभावस्य हेतुतावादिमते । ६ तव = परामर्शस्यैव कारणत्वमिति वादिनस्तव ।

तथा च[1] तदभाव[2]कूटविशिष्टव्याप्यप्रकारताशालिनिर्णयत्वेनैकहेतुत कल्पने नानुपपत्तिः । धूमपरामर्शदशायामालोकाभाववति आलोकप्रकारकत्वादिरूपाप्रामाण्यग्रहसत्त्वेऽपि तदीयव्याप्यप्रकारतायां स्वीयालोकाभाववद्विशेष्यतानिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतालोकप्रकारत्वसम्बन्धेन तत्रा[3]सत्त्वात्, उपदर्शिता[4]प्रामाण्यग्रहाभावकूटस्य तत्र[5] सत्त्वात् इति चेत्, एवं सति[6] तादृशाभावकूटस्य विशेष्यविशेषणभावेन विनिगमनाविरहेणानन्तकारणताप्रसङ्गादवच्छेदकगौरवञ्चेति प्रत्येकाभावं निवेश्य धूमप्रकारत्वादिना हेतुताकल्पनमेव तदपेक्षया[7] समुचितम् । न च तावतामभावानां यद्येकाभावविशेषणतयाऽपराभावो निवेश्यते तदैव विपर्यासक्रमेण निवेशे विनिगमनाविरहः प्रसज्येत, तदेव न, एकाभावेऽपराभाववैशिष्ट्यस्य सामानाधिकरण्यसम्बन्धेनैव निवेशनीयतया सम्बन्धगौरवात् । परन्तु सर्वेषामेवाभावानां विशेषणताविशेषसम्बन्धेन प्रकारतायां विशेषणत्वमुपगन्तव्यमिति न दोष इति वाच्यम । प्रकारतानिष्ठैककारणतावच्छेदकतायां तावतामभावानामवच्छेदकत्वं न सम्भवति, तथासत्य[8]वच्छेदकभेदेनाऽवच्छेदकतायास्तदभेदेन च कारणतायाः भेदप्रसङ्गात्, कारणतायास्तदवच्छेदकतायाश्चैक्यानुपपत्तेः । अवच्छेदकतायाः व्यासज्यवृत्तित्वस्यान्यत्र दूषितत्वात्, तावदभावे व्यासज्यवृत्तिमेकां कारणतावच्छेदकतामुपगम्योपपादनस्यान्याय्यत्वात् ।

तस्मात् तादृशप्रकारता[9]निष्ठकारणतावच्छेदकतायामेकाभावोऽवच्छेदकः तन्निष्ठ[10]तादृशावच्छेदकतायां सामानाधिकरण्यसम्बन्धेनापराभावोऽवच्छेदक इत्येवं रीतिरादरणीया । तत्र विपर्यासक्रमेण निवेशनमादाय तत्र विनिगमनाविरहो ब्रह्मणाऽप्यशक्यवारणः

---

१ तथा च = व्याप्यप्रकारतायामप्रामाण्यग्रहाभावनिवेशे च । २ तदभाव = अप्रामाण्यग्रहाभाव । ३ तत्र = व्याप्यप्रकारतायां । ४ उपदर्शित = धूमाभाववद्विशेष्यतानिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतधूमप्रकारतात्वादिसम्बन्धावच्छिन्नप्रतियोगिताक । ५ तत्र = प्रकारतायां । ६ एवं सति = एकहेतुताकल्पने सति । ७ तदपेक्षया = एकहेतुताकल्पनापेक्षया । ८ तथा सति = अवच्छेदकत्वे सति । ९ तादृशप्रकारता = अनुमितिजनकतावच्छेदकीभूतव्याप्यप्रकारता । १० तन्निष्ठ = एकाभावनिष्ठ ।

न च निखिलानां धूमप्रकारत्वालोकप्रकारत्वघटिताप्रामाण्यग्रहा- णां स्वीय[1]किञ्चिद्धर्मावच्छिन्नाभाववद्विषयतानिष्ठप्रकारतानिरूपितनिरूपितत्वप्रकारतानिरूपितप्रकारतानिष्ठविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताक एक एवाभावो व्याप्यप्रकारतायां निवेश्यत इति न विनिगमनाविरहप्रयुक्तगौरवावकाश इति वाच्यम्। तथा सति[2] आलोकाभाववति धूमप्रकारकमित्येतादृशज्ञानदशायां वह्निव्याप्यधूमप्रकारकपर्वतविशेष्यकपरामर्शादनुमित्यनुत्पादप्रसङ्गात्, तादृश[3]ज्ञानस्योपदर्शितसम्बन्धेन तादृश[4]धूमप्रकारतायां सत्त्वेन तादृशसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावासत्त्वात्, तादृशविशेष्यतावच्छेदकधर्मे स्वीयप्रकारत्वनिष्ठविशेष्यतानिरूपितनिरूपितत्वप्रकारतानिरूपितविशेष्यतानिष्ठप्रकारतानिरूपिताधिकरणप्रकारतानिरूपिताभावप्रकारतानिरूपितप्रतियोगिप्रकारतावच्छेदकत्वमधिकं निवेश्य तत्रानुमित्युपपादनेऽपि धूमाभाववत्यालोकप्रकारताकमालोकाभाववति धूमप्रकारताकञ्चेदं ज्ञानमित्येतादृशज्ञानकाले तादृश[5]परामर्शादनुमित्युपपादनासम्भवात्, धूमत्वस्य तज्ज्ञानीयतथाविधप्रतियोगिप्रकारतावच्छेदकत्वात् तदीय[6]प्रकारतानिष्ठविशेष्यतावच्छेदकतावच्छेदकत्वाच्चेति न किञ्चिदेतत् ।

एवम्, धूमालोकादिपरामर्शानामेकरूपेण हेतुत्वे सिद्धिकाले धूमलिङ्गकेच्छासत्त्वे आलोकलिङ्गकपरामर्शे सति धूमलिङ्गकपरामर्शं विनैव धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावबलादनुमित्यापत्तिः ।

न चैतन्मते धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावानां फलजनने धूमपरामर्शत्वाद्यवच्छिन्नस्य सहकारिता सम्भवति धूमपरामर्शत्वादीनामनुमितिजनकतानवच्छेदकत्वात्, किन्तु जनतावच्छेदकीभूतवह्निव्याप्यवत्तानिर्णयविशिष्ट-

---

१ स्वीय = अप्रामाण्यज्ञानीय । २ तथा सति = व्याप्यप्रकारतायामेकाभावनिवेशे सति । ३ तादृश = परामर्शात्मक । ४ तादृश = वह्निव्याप्य । ५ तादृश = वह्निव्याप्यधूमप्रकारकपर्वतविशेष्यक । ६ तदीय = ज्ञानीय ।

स्यैव तत्सहकारितया च नोक्तापत्तिर्वारयितुं शक्यते तथाभूतस्यालोकपरामर्श-स्यैव सत्त्वात्, तस्मात् धूमादिलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकपरा-मर्शत्वेन विशिष्यहेतुताकल्पनमावश्यकम् ।

अथ धूमादिलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहवि-शिष्टसिद्ध्यभावत्वेन हेतुता न सम्भवति, धूमालोकोभयादितत्तद्विषयकसमू-हालम्बनपरामर्शजन्यायामालोकादिलिङ्गकेच्छाधीनसिद्धिकालीनानुमितौ व्य-भिचारप्रसङ्गात । अपि तु सामान्यतः पर्वतादिपक्षकवह्न्याद्यनुमितित्वाव-च्छिन्नं प्रति तत्तल्लिङ्गकपरामर्शविशिष्टेच्छाविरहविशिष्टसिद्ध्यभावत्वेनैकरूपेण हेतुत्वं कल्पनीयम् । एवञ्च केवलधूमलिङ्गकेच्छासत्त्वेऽपि धूमलिङ्गकपरामर्श-विशिष्टधूमलिङ्गकेच्छारूपोत्तेजकविरहेण विशिष्टाभावसत्त्वान्नानुपपत्तिरिति चेत् न तत्तल्लिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावजन्यतावच्छेदककोटौ तत्तल्लिङ्गके-च्छाविरहविशिष्टसिद्धिविशिष्टान्यत्वेनैवोक्तसमूहालम्बनानुमितौ व्यभिचारवा-रणसम्भवात्, तत्तल्लिङ्गकपरामर्शविशिष्टतत्तल्लिङ्गकेच्छाभावकूटनिवेशेन सिद्धेः प्रतिबन्धकत्वकल्पने प्रयोजनाभावात् ।

न च तत्तल्लिङ्गकानुमितीच्छाविरहविशिष्टसिद्ध्यभावत्वेन हेतुत्वे पक्ष-तायाः परामर्शस्य च लिङ्गभेदेन कारणताबाहुल्याद्गौरवमिति तदपेक्षया तादृशा-भावकूटविशिष्टसिद्ध्यभावत्वादिना एकहेतुता कल्पनमेवोचितमिति वाच्यम् । अभावकूटस्यैकत्र निवेशे विशेष्यविशेषणभावेन विनिगमनाविरहेणानन्त्यप्रसङ्गात् अवच्छेदकगौरवप्रसङ्गाच्च, लिङ्गभेदेन पक्षतापरामर्शयोः कारणकल्पनस्यैवोचि-तत्वात् ।

एवम् हेतुतावच्छेदकविषयतामनिवेश्य साध्यव्याप्यत्वावावच्छिन्नप्र-कारताशालिनिर्णयत्वेन हेतुत्वे, व्यभिचारस्य हेत्वाभासत्वानुपपत्तिः, निर्द्धर्मिता-वच्छेदकस्य व्याप्तिग्रहस्य व्यभिचारज्ञानाप्रतिबध्यतया व्यभिचारज्ञानकालेऽपि

---

१ उक्तापत्तिः = धूमलिङ्गकपरामर्श [ नैव धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावबलादनुमित्या-पत्तिः । २ एवञ्च = एकरूपेण हेतुताकल्पने च । ३ उक्तसमूहालम्बनानुमितौ = धूमालोको भयादितत्तद्विषयकसमूहालम्बनपरामर्शजन्यायामालोकलिङ्गकेच्छाधीनसिद्धिकालीनानुमितौ । ४ तदपेक्षया = कारणताबाहुल्यापेक्षया । ५ तादृशाभाव = तत्तल्लिङ्गकेच्छाभाव । ६ अभाव = इच्छाविरह । ७ एकत्र = सिद्धौ ।

साध्याभाववदवृत्तिमान् पक्ष इत्येतादृशपरामर्शस्य व्याप्यांशे निर्द्धर्मितावच्छेदकस्योपपत्तौ बाधकाभावेनानुमित्युत्पत्तेरावश्यकत्वात् ।

यत्तु, सद्धर्मितावच्छेदकव्याप्तिज्ञानस्याप्यनुमितिहेतुतया तद्विरोधि[1]तयैव व्यभिचारस्य हेत्वाभासत्वोपपत्तिरिति तन्न, अनुमितिकारणीभूतयत्किञ्चिज्ज्ञानजन्यविरोधिन एव हेत्वभासत्वे धूमादिलिङ्गकानुमितौ तद्घटकीभूतसमूहालम्बनपरामर्शविरोधिनो द्रव्यत्वादिनिष्ठवह्निव्यभिचारस्यापि तथात्वापत्तेः[2]। तथा च यत्प्रयुक्तानुमित्यनुत्पादः क्वचित्स हेत्वाभासः, न चैवं व्यभिचारो भवन्मते[3] हेत्वाभासः, त्वन्मते तज्ज्ञानत्वेऽपि[4] हेतुतावच्छेदकानवगाहिपरामर्शोत्पत्त्याऽनुमित्युत्पादस्यावश्यकतया तज्ज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वविरहात् ।

यत्तु साध्यव्यभिचारी हेतुरिति व्यभिचारज्ञानकाले साध्यव्याप्यहेतुमान् पक्ष इत्येतादृशनिर्णयस्य भिन्नेन्द्रियजन्यघटाद्यनुमितिसामग्र्यास्सत्वेऽनुमित्युत्पादो व्यभिचारधीप्रयुक्तः, तथा हि यदि तत्र व्यभिचारधीर्न स्यात् तदा साध्यव्याप्यवान् पक्ष इत्येतादृशानुमानिकपरामर्शोत्पत्त्याऽनुमितिस्स्यादेव सा च[5] तत्रास्तीति[6] नानुमानिकपरामर्शस्तत्र जायते, तत्र तस्य[7] विरोधित्वात्, व्याप्त्यंशे निर्द्धर्मितावच्छेदकप्रात्यक्षिकपरामर्शस्तु विभिन्नविषयानुमितिसामग्रीप्रतिबन्धकसत्त्वात् नोत्पद्यत इति तद (नु) त्पादे व्यभिचारधीरपि प्रयोजिकेति तदसत् । एतादृशरीत्या पर्वतो वह्निमानित्यादावपि पर्वतनिष्ठघटाभावादेरपि दोषताप्रसङ्गात्, तथा हि यत्र[8] न विनश्यदवस्थसिद्धिकाले वह्निव्याप्यधूमवान पर्वतो घटव्याप्यवानित्याकारकपरामर्श अथ च घटाभाववान् पर्वत इत्येतादृशनिर्णयः, भूतलं घटवदित्यनुमितिसामग्री च, तत्र[9] यदि घटाभाववान पर्वत इति निर्णयो न स्यात् तदा वह्निव्याप्यधूमवान् पर्वतो घटवानित्येतादृशानुमानिकनिर्णयोत्पत्त्या पर्व-

---

१ तद्विरोधि = सद्धर्मितावच्छेदकव्याप्तिज्ञानविरोधि । २ तथात्वापत्तेः = हेत्वाभासत्वापत्तेः । ३ भवन्मते = हेतुतावच्छेदकविषयतामनिवेश्य व्याप्यत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन कारणतावादिमते । ४ तज्ज्ञान = व्यभिचारज्ञान । ५ सा च = व्यभिचारधीश्च । ६ तत्र = व्यभिचारधीस्थले । ७ तस्य = व्यभिचारज्ञानस्य । ८ यत्र = यादृशस्थलविशेषे । ९ तत्र = तादृशस्थले ।

तो वह्निमानित्येतादृशानुमितिस्स्यादेव, सोऽस्ति[1] च न तादृश[2]ानुमानिकनिर्णय उत्पद्यतेऽत[3]स्तदनुत्पादे[4] घटाभाववान् पर्वत इत्येतादृशनिर्णयस्यापि प्रयोजकत्वमिति तस्मात् तादृशरीत्या[5] प्रयोजकत्वं न हेत्वाभासत्वसम्पादकमिति ।

अत्रेदं समाधीयते, हेतुतावच्छेदकधर्मान् विशिष्यानिवेश्यापि निर्णयत्वं सुवचमेव न तन्निर्वचनान्यथानुपपत्त्या विशिष्यहेतुतावच्छेदकनिवेशः, तथा हि स्वा[6]वच्छिन्नप्रतियोगिताकभेदवत्त्वव्याप्तिप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वं व्याप्यवत्तानिर्णयत्वम् ।

भेदनिष्ठं स्वावच्छिन्नप्रतियोगिताकत्वञ्च स्वनिष्ठा या स्वावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेषताकत्वसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकता तन्निरूपकत्वम् । धूमत्वावच्छिन्नाभावकोटिको वह्निव्याप्यधूमादिमत्तासंशयो नैतादृशोभयसम्बन्धेन केनापि धर्मेण विशिष्टो धूमान्यधर्मस्य तत्र व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेनासत्त्वात्, धूमत्वस्य च तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताश्रयभेदसम्बन्धेनासत्त्वात् ।

तथा हि यदि तादृशसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदस्तत्र वर्त्तते तदैव तत्र धूमत्वं तादृशेन[7] सम्बन्धेन स्यात्, प्रतियोगितावच्छेदकताघटकसम्बन्धेन धूमत्वरूपप्रतियोगितावच्छेदकविशिष्ट इति न तत्र तादृशभेदो वर्त्तितुमीष्टे ।

वह्निव्याप्यवान् पर्वत इत्यादिनिर्णयानां तादृशोभयसम्बन्धेन धूमत्वादिरूपहेतुतावच्छेदकधर्मवत्त्वमक्षतमेव ।

तादृशभेदप्रतियोगितावच्छेदकताघटसम्बन्धघटकविशेष्यतानिष्ठं स्वावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितत्वञ्च, स्वनिरूपकप्रकारतानिरू-

---

१ सोऽस्ति = घटाभाववान् पर्वत इति निश्चयोऽस्ति । २ तादृश = वह्निव्याप्यधूमवान् पर्वतो घटवान् । ३ तत्र = तादृशस्थले । ४ तदनुत्पादे = आनुमानिकनिश्चयानुत्पत्तौ । ५ तादृशरीत्या = यत्प्रयुक्तोऽनुमित्यनुत्पादः क्वचित्स हेत्वाभास इति रीत्या । ६ स्व = किञ्चिद्धर्म. । ७ तादृशेन = निरुक्तोभयेन ।

पितत्वसम्बन्धेन, साध्यव्याप्यत्वनिष्ठावच्छेदकत्वान्यावच्छेदकताविशिष्टान्या या स्वनिष्ठावच्छेदकता तन्निरूपकीभूतप्रतियोगिप्रकारतानिरूपितत्वम्, यथाश्रुते नीलधूमाभाववान् पर्वतः वह्निव्याप्यधूमवांश्च पर्वत इत्येतादृशनिर्णयासंग्रहात्, विशिष्टधूमत्वस्य धूमत्वानतिरेकतया नीलधूमत्वावच्छिन्नाभावस्यापि धूमत्वावच्छिन्नाभावत्वात्। वास्तवस्वावच्छिन्नाभावप्रकारतानिवेशे धूमाभावत्वादिनाऽभावान्तरावगाहिसंशयवारणासंभवात्। यथाविवक्षिते[1] तु न दोषः, उपदर्शित[2]निश्चयीयाभावविषयतानिरूपितधूमप्रकारतावच्छेदकतायाः स्वनिरूपितप्रकारतानिरूपितत्वसम्बन्धेन नीलनिष्ठावच्छेदकताविशिष्टत्वात्। तादृशावच्छेदकतायां साध्यव्याप्तिनिष्ठावच्छेदकताभिन्नत्वनिवेशात्, यत्र संशये वह्निव्याप्यधूमत्वादिना तादृशधूमादिरभावप्रतियोगितया भातः तादृशसंशयवारणम्, तत्र धूमत्वादिनिष्ठतादृशावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन व्याप्तिनिष्ठावच्छेदकतान्यावच्छेदकताविशिष्टान्यत्वसत्त्वात्। न चैवमपि जातिविशेषत्वादिना धूमत्वं यत्राभावविशेषणतापन्नधूमांशे विशेषणतयाऽवगाहमानं तत्र तादृशविशेषणतयाऽवगाहमानस्य जातिविशेषावच्छिन्नाभाववान् वह्निव्याप्यवांश्च पर्वत इत्येतादृशनिर्णयस्यासंग्रहादिति वाच्यम्। तादृशा[3]वच्छेदकतायां निरवच्छिन्नत्वस्यापि निवेश्यत्वात्।

अथैवम्, वह्निव्याप्यनीलधूमवान्न वा पर्वतः वह्निव्याप्यजातिविशेषवद्वान्न वा पर्वत इत्यादिसंशयसाधारण्यं दुर्वारं, पूर्वज्ञानीया[4]भावविषयतानिरूपितधूमनिष्ठप्रकारतावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन नीलनिष्ठावच्छेदकताविशिष्टतया उत्तरज्ञानीय[5]तादृशप्रकारतावच्छेदकतायाः सावच्छिन्नतया तादृशावच्छेदकताविशिष्टान्यनिरवच्छिन्नावच्छेदकताकप्रतियोगिप्रकारतानिरूपिताभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेन धूमत्वविशिष्टस्य तत्र भेदसत्वात् इति चेन्न,

१ यथाविवक्षिते = निरुक्तोभयसम्बन्धेनकिञ्चिद्धर्मविशिष्टत्वरूपव्याप्यवत्तानिर्णयत्वविवक्षणे।
२ उपदर्शितनिश्चय = नीलधूमाभाववान् पर्वतः वह्निव्याप्यधूमवांश्च पर्वत इति निश्चय।
३ तादृश = अभावीय। ४ पूर्वज्ञानीय = वह्निव्याप्यनीलधूमवान्न वा पर्वत इति ज्ञानीय।
५ उत्तरज्ञानीय = वह्निव्याप्यजातिविशेषवद्वान्न वा पर्वत इति ज्ञानीय।

तादृशोभयसम्बन्धघटकीभूतचरमदलप्रविष्टस्वावच्छिन्नप्रकारतेत्यस्य स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन व्याप्तिनिष्ठावच्छेदकताभिन्नावच्छेदकताविशिष्टान्यनिरवच्छिन्नस्वनिष्ठावच्छेदकताकप्रकारताकेत्यर्थः[1]।

एवञ्च व्याप्तिप्रकारतानिरूपिततादृशप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेन तादृशसंशये[2] धूमत्वविशिष्टत्वाभावान्न तत्साधारण्यप्रसङ्गः।

अथैवं वह्निव्याप्यनीलधूमवान् पर्वतः वह्निव्याप्यजातिविशेषवह्वान् पर्वत इत्यादिनिर्णयासंग्रह इति चेत् का क्षतिः, तादृशनिर्णयानां भवन्मत इवास्मन्मतेऽपि पृथगेव हेतुतायाः स्वीकरणीयत्वात्,एवमपि स्वरूपतः शुद्धधूमत्वालोकत्वाद्यनन्तधर्मितावच्छेदकव्याप्यवगाहिपरामर्शानामनुगमसम्भवेन लाघवस्याक्षतत्वात्। यत्तु एतादृश[3]निर्णयत्वस्य हेतुतावच्छेदकानवगाहिव्याप्यवत्तानिर्णयसाधारण्यं न संघटते, तत्र[4]ोपदर्शितसम्बन्धेन कस्यचिद्धर्मस्य वैशिष्ट्यासत्त्वादिति तदनुगुणमेव, यतो हेतुतावच्छेदकानवगाहिज्ञानस्यानुमितिजनकत्वे व्यभिचारस्य हेत्वाभासता न स्यात्। इदानीन्तु तादृशज्ञानस्या[5]नुमितिजनकत्वाभावात् हेतुतावच्छेदकानवगाहिज्ञानस्य व्यभिचारज्ञानाप्रतिबध्यतया व्यभिचारस्य हेत्वाभासता अनायासेनैवोपपत्तेरिति।

एवमप्रामाण्यज्ञानाभावनिवेशानुरोधेनापि विशिष्य न हेतुतावच्छेदकप्रवेशः, धूमप्रकारत्वालोकप्रकारत्वादिघटितनानाविधाप्रामाण्यग्रहाभावानामनुगतरूपावच्छिन्नप्रतियोगिताकैकाभावस्य निवेशसम्भवात्। तथा हि निखिलाप्रामाण्यज्ञानीयप्रकारतावृत्तिप्रकारतायाः स्वावच्छिन्नाभाववद्विशेष्यताकत्वा-

---

१ तादृशोभय = स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वव्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभय। २ तादृशसंशये = वह्निव्याप्यनीलधूमवान्न वा पर्वतः वह्निव्याप्यजातिविशेषवह्वान्न वा पर्वत इति संशये। ३ एतादृश = निरुक्तोभयसम्बन्धेन यत्किञ्चिद्धर्मविशिष्टत्वरूप। ४ तत्र = हेतुतावच्छेदकानवगाहिव्याप्यवत्तानिर्णये। ५ तादृशज्ञानस्य = हेतुतावच्छेदकानवगाहिज्ञानस्य।

वच्छिन्नप्रकारतानिरूपितत्वस्वावच्छिन्न[1]निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन यत्किञ्चिद्धर्मविशिष्टप्रकारतात्वेनानुगमय्य स्वीयतादृशप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नवच्छेदकतावच्छेदकधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानत्वावच्छिन्नाभावविशिष्टा या व्याप्यात्वावच्छिन्नाप्रकारता तन्निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिर्णयत्वेन परामर्शस्य हेतुता उपगम्यते, वह्निव्याप्यधूमवान् पर्वत इत्येतादृशनिर्णयदशायां धूमाभाववति धूमप्रकारताकमित्येतादृशाप्रामाण्यग्रहसत्त्वे तादृश[2]परामर्शीयव्याप्यप्रकारतायां नोपदर्शित सम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताकाभावो वर्त्तते, तत्रोपदर्शितो[3]भयसम्बन्धेन धूमत्वविशिष्टा या तादृशाप्रामाण्यज्ञानीयधूमप्रकारतावृत्तिप्रकारता तन्निरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकीभूतधूमत्वावच्छिन्नत्वसत्त्वात्। तादृशसम्बन्धेन ज्ञानत्वावच्छिन्नस्याप्रामाण्यज्ञानस्यैव सत्त्वादतो न तत्रा[4]नुमितिप्रसङ्गः।

धूमाभाववति आलोकप्रकारकग्रहदशायां च न तादृशपरामर्शादनुमित्यनुपपत्तिः, तादृशपरामर्शीयधूमप्रकारतायां धूमाभाववति आलोकप्रकारकमित्येतादृशज्ञानीयप्रकारित्वप्रकारतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकीभूतालोकावच्छिन्नत्वविरहात्।

आलोकाभाववति धूमप्रकारकमित्येतादृशज्ञानीयधूमप्रकारित्वप्रकारतावच्छेदकीभूतधर्मावच्छिन्नत्वसत्त्वेऽपि तादृशधूमप्रकारित्वप्रकारतायाः स्वावच्छिन्नभाववद्विशेष्यताकत्वावच्छिन्नत्वप्रकारतानिरूपितत्वञ्च, स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नावच्छेदकताविशिष्टं यत्तदन्यस्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताभावप्रकारतानिरूपिताधिकरणप्रकारतानिरूपितविशेष्यत्वप्रकारतानिरूपितनिरूपितत्वावच्छिन्नप्रकारतानिरूपितत्वम्। यथाश्रुते नीलधूमाभाववति धूमप्र-

---

१ स्व = किञ्चिद्धर्म। २ तादृश = वह्निव्याप्यधूमवान् इत्याकारक। ३ उभयसम्बन्धेन = तादृशविशेष्यताकत्वावच्छिन्नप्रकारतानिरूपितत्व, स्वावच्छिन्न निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन। ४ तत्र = धूमाभाववति धूमप्रकारकमित्याकारकाप्रमाण्यग्रहस्थले।

कारकमित्येतादृशज्ञानीयधूमप्रकारत्वादिविषयताया अपि उपदर्शित[1]सम्बन्धेन धूमत्वादिविशिष्टत्वात्, तादृशज्ञान[2]काले धूमादिपरामर्शादनुमित्यनुदयापत्तेः। इदानीन्तु तादृशज्ञानीयधूमत्वादिनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रतियोगितावच्छेदकतायाः स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेन नीलादिनिष्ठावच्छेदकताविशिष्टत्वात्, तादृश[3]सम्बन्धेनावच्छेदकताविशिष्टं यत्तदन्यस्वनिष्ठावच्छेदकताकप्रकारताघटितोपदर्शितसम्बन्धेन तादृशज्ञानीयप्रकारित्वविषयतायां न धूमत्वादिविशिष्टत्वमिति नानुपपत्तिः। भेदप्रतियोगितावच्छेदकीभूतावच्छेदकतायां साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नत्वनिवेशात् वह्निव्याप्यधूमाभाववति वह्निव्याप्यधूमप्रकारकमित्येतादृशज्ञानीयप्रकारत्वसंग्रहः।

एवं सति वह्निव्याप्यधूमाभाववति धूमप्रकारकमित्येतादृशज्ञानीयप्रकारताया अपि उपदर्शितोभय[4]सम्बन्धेन धूमत्वादिविशिष्टत्वात्, तादृशज्ञानकालेऽनुमित्यनुदयापत्तिः, तादृशज्ञानस्य[5] नीलधूमाभाववति धूमप्रकारकमित्येतादृशज्ञानसमशीलतयाऽप्रामाण्यज्ञानानात्मकतया इष्टापत्तेरयोगात् इति चेत्, तादृशस्थलेऽनुमित्युत्पादस्य प्रामाणिकत्वे स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वेत्यत्र स्वावच्छिन्नावच्छेदकतायां साध्यव्याप्यत्वावच्छिन्नत्वमपि निवेश्यम्। व्याप्यत्वाविषयकाणां धूमाभाववति धूमप्रकारकमित्याकारकाप्रामाण्यग्रहाणां पृथगेवाभावो निवेशनीयः, तत्र[6] प्रतियोगितावच्छेदकतायां साध्यव्याप्यत्वनिष्ठावच्छेदकताभिन्नत्वमनिवेश्य सामान्यतोऽवच्छेदकताविशिष्टान्यत्वमेव स्वनिष्ठावच्छेदकतायां निवेशनीयम्।

स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकेत्यत्रापि अवच्छेदकतायां साध्यव्याप्यत्वावच्छिन्नत्वं न निवेश्यम्, जातिविशेषवदभाववति धूमप्रकारकमित्येतादृशज्ञानकाले धूमादिपरामर्शादनुमित्युपपत्तये स्वनिष्ठावच्छे-

---

१ उपदर्शित = निरुक्तोभय। २ तादृशज्ञान = नीलधूमाभाववति धूमप्रकारकमित्याकारकज्ञान। ३ तादृश = निरुक्तोभय। ४ उपदर्शितोभय = स्वावच्छिन्नाभाववद्विशेष्यताकत्वावच्छिन्नप्रकारतानिरूपितत्वस्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभय। ५ तादृशज्ञान = वह्निव्याप्यधूमाभाववति धूमप्रकारकमिति ज्ञान। ६ तत्र = निवेशे।

दकतायां निरवच्छिन्नत्वमपि निवेश्यम् । वह्निव्याप्यनीलधूमवान पर्वत इत्याद्याकारकपरामर्शात् नीलधूमाभाववति धूमप्रकारकमित्येतादृशाप्रामाण्यग्रहसत्त्वे वह्निव्याप्यजातिविशेषवद्वान पर्वत इत्येतादृशपरामर्शात् जातिविशेषवदभाववति जातिविशेषवत्प्रकारकमित्येतादृशाप्रामाण्यग्रहसत्त्वे चानुमित्यापत्तिरिति तु नाशङ्कनीयम्, पूर्वोपदर्शितेन वह्निव्याप्यनीलधूमवान्न वा पर्वतः वह्निव्याप्यजातिविशेषवद्वान्न वा पर्वत इत्यादितादृशसंशयादनुमित्यापत्तिवारणेनैवात्रापि[1] अनुमित्यापत्तिवारणादिति ।

एकपुरुषीयाप्रामाण्यग्रहसत्त्वे पुरुषान्तरस्यानुमित्यनुदयप्रसङ्ग इति तत्पुरुषीयानुमितिं प्रति तत् पुरुषीयाप्रामाण्यग्रहाभावविशिष्टतत्पुरुषीयव्याप्यप्रकारताशालिपरामर्शत्वेन हेतुता वक्तव्येति पुरुषभेदेनानन्तकारणताप्रसङ्ग इति चेत्, एवमपि विषयाणां पुरुषापेक्षया बहुविधतया व्यापकसामाधिकरण्यरूपव्याप्तिज्ञानहेतुतापेक्षया लाघवस्य दुरपह्नवत्वात् ।

स्यादेतत्, एवमपि उपदर्शितोभयसम्बन्धेनाप्रामाण्यग्रहाभावस्य[2] व्याप्यप्रकारतायां निवेशे प्रथमपरामर्शे इदं ज्ञानं धूमाभाववतिधूमप्रकारताकमित्येतादृशाप्रामाण्यग्रहसत्त्वे धूमादिपरामर्शान्तरादप्यनुमित्यनुत्पादो दुर्वार इति तदीयव्याप्यप्रकरतायामपि उपदर्शितसम्बन्धेन तादृशाप्रामाण्यग्रहसत्त्वात्, अतो विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकप्रमाण्यग्रहाभावस्यैव परामर्शांशे विशेषणत्वमुपगन्तव्यम् । तथा च हेतुतावच्छेदकनिवेशनमावश्यकमेव, न च तादृशप्रकारत्वप्रकारतावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वतादृशप्रकारत्वप्रकारतानिरूपितविशेष्यतानिरूपितविशेष्यताश्रयज्ञाननिरूपितत्वोभयसम्बन्धेन ज्ञानत्वावच्छिन्नाभावो निवेशनीयः । उक्तस्थले च तादृशपरामर्शीयधूमप्रकारतायाः तादृशाप्रामाण्यज्ञानीयतथाविधप्रकारित्वप्रकारतावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वसत्त्वेऽपि स्वीयतादृशप्रकारित्वप्रकारतानिरूपितविशेष्यताश्रयप्रथमपरामर्शनिरूपितत्वाभावादुक्तोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽक्षत एवातो नानुपपत्तिरिति वाच्यम् । एवमपि यत्र प्रथमपरामर्शानन्तरं इदं ज्ञानं धूमाभा-

---

१ अत्रापि = अप्रामाण्यग्रहस्थलेऽपि । २ उभयसम्बन्धेन = स्वावच्छिन्नाभाववद्विशेष्यताकत्वावच्छिन्नप्रकारतानिरूपितत्वस्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन ।

ववति धूमप्रकारकं भाविज्ञानमालोकाभाववति आलोकप्रकारकमित्याकारको-भयपरामर्शविशेष्यकाप्रामाण्यज्ञानं तदनन्तरमनुमित्यनुत्पादो दुर्वार इति, तत्र द्वितीयपरामर्शीयधूमप्रकारतायां तादृशा[1]प्रामाण्यज्ञानीयतथाविधप्रकारि-त्वप्रकारतावच्छेदकतावच्छेदकधूमत्वावच्छिन्नत्वात्, तदीय[2]तथाविधालोकप्र-कारित्वप्रकारतानिरूपितविशेष्यताश्रयपरामर्शनिरूपितत्वाच्च, उक्तोभयसम्ब-न्धेन तादृशाप्रामाण्यज्ञानस्यैव सत्त्वात्।

यदि च स्वावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपित-विशेष्यताश्रयज्ञाननिरूपितत्वोभयसम्बन्धेन ज्ञानीयतथाविधप्रकारताया एवा-भावो व्याप्यप्रकारतायां निवेश्यते, उपदर्शित[3]समूहालम्बनाप्रामाण्य-ज्ञानीयतत्प्रकारत्वप्रकारतावच्छेदकतावच्छेदकावच्छिन्नत्वेऽपि द्वितीयपराम-र्शीयधूमप्रकारतायां तन्निरूपितविशेष्यताश्रयज्ञाननिरूपितत्वमित्युक्तोभयसम्ब-न्धेन तत्र ज्ञानीयतथाविधप्रकारत्वप्रकारित्वाभावोऽक्षत एवेति नानुमित्यनुपप-त्तिरिति विभाव्यते, तथापि ज्ञानव्यक्तिभेदेन विषयतामेदाभ्युपगमे द्वितीय-परामर्शीयधूमप्रकारतायास्तादृशोभयसम्बन्धेन तादृशाप्रामाण्यज्ञानीयप्रकारि-त्वप्रकारताविशिष्टा या प्रथमपरामर्शीयधूमप्रकारता तदवच्छिन्नत्वात्।

न च तादृशोभयसम्बन्धावच्छिन्नप्रतियोगिताकतथाविधप्रकारित्व-प्रकारत्वाभाव इति न निस्तार इति चेत्, मैवम्, प्रथमपरामर्शेऽप्रामाण्यग्रहसत्त्वे तत्समानाकारकपरामर्शान्तरादपि तावदनुमितिर्नेष्यत एव, यावत्तस्य ना (?) इति न कदाचिदनुपपत्तिः।

अथ वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यालोकवान् पर्वत इत्याका-रकसमूहालम्बनान्तरं धूमाभाववति धूमप्रकारकाप्रामाण्यग्रहः तत्रा[4]नुमितिदुर्वा-रैव, तादृशपरामर्शस्योपदर्शितसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभाव-विशिष्टालोकप्रकारताशालित्वात्।

---

१ तादृश = उभयविध। २ तदीय = उभयविधपरामर्शविषयककाप्रामाण्यज्ञानीय। ३ उपद-र्शित = उभयपरामर्शविषयक। ४ तत्र = तादृशाप्रमाण्यग्रहस्थले।

निरुक्तस्वावच्छिन्नप्रतियोगिताकभेदवत्त्वव्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन-धूमत्वविशिष्टतया निरुक्तस्य किञ्चिद्धर्मविशिष्टत्वरूपनिर्णयत्वस्यापि तत्र सत्त्वाच्चेति चेत्, सत्यम्. तादृशसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभावविशिष्टप्रकारताकत्वतथाविध[1]निर्णयत्वयोः स्वातन्त्र्येण निवेशने भवत्येवेयमनुपपत्तिः, तदेव न, परन्तूपदर्शित[2]ोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वरूपनिर्णयशरीरस्य सम्बन्धघटकीभूता या व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारता तत्रैव[3] तादृशसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभावो निवेश्यते। एवञ्चोक्तस्थले[4] तादृशाप्रामाण्यग्रहाभावविशिष्टस्वावच्छिन्नप्रकारताघटितसम्बन्धेन कस्यापि धर्मस्य न वैशिष्ट्यम् तादृशसमूहालम्बनपरामर्शोऽस्तीति धूमत्वावच्छिन्नप्रकारतायाः निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकाप्रामाण्यग्रहाभावविशिष्टत्वात्। स्वपदेन धूमत्वोपादानस्य, स्वावच्छिन्नप्रतियोगिताकाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वस्य चालोकत्वनिरूपितत्वस्य तादृशपरामर्शेऽसत्त्वेन स्वपदेनालोकत्वोपादानस्यापि असम्भवात् अतो न तत्रा[5]नुमित्यापत्तिरिति।

एवम् सिद्धिकाले धूमलिङ्गकेच्छासत्त्वे च सत्यालोकलिङ्गकपरामर्शे धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावबलादनुमित्यापत्तिरिति, धूमपरामर्शत्वादिना हेतुताकल्पनमावश्यकमिति यदुक्तं प्राक् तदपि न समीचीनम,धूमलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्ध्यभावत्वादिना न पक्षतायाः हेतुत्वम्,अपि तु सामान्यतः पर्वतत्वावच्छिन्नविशेष्यताकवह्निविधेयताकानुमितित्वावच्छिन्नं प्रति वह्निव्याप्यवत्तानिर्णयविशिष्टपर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितिगोचरेच्छाविरहविशिष्ट-

---

१ तथाविध = तादृशोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टत्वरूप। २ उपदर्शित = स्वावच्छिन्नप्रतियोगिताकभेदवत्त्वव्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वरूप। ३ तत्रैव = तादृशप्रकारतायामेव। ४ उक्तस्थले = वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यलोकवान् पर्वत इत्याकारकसमूहालम्बनानन्तरंधूमाभाववति धूमप्रकारकाप्रामाण्यग्रहस्थले। ५ तत्र = तादृशाप्रमाण्यग्रहस्थले।

सिद्ध्यभावत्वेनैकमेव हेतुत्वं कल्प्यते । तादृशपरामर्शवैशिष्ट्यञ्च[1], स्वीय[2]-पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता या व्याप्यप्रकारता तदवच्छेदकधर्माव-च्छिन्नलिङ्गकत्वप्रकारत्वस्वसामानाधिकरण्योभयसम्बन्धेन । धूमत्वाद्य-वच्छिन्नलिङ्गकत्वप्रकारकेच्छा च नैतादृशोभयसम्बन्धेनालोकत्वाद्यवच्छिन्न[3]-लिङ्गकपरामर्शविशिष्टेति न तथाविधेच्छाकाले[4] सिद्धिसत्त्वे आलोकलिङ्गकपरा-मर्शादनुमित्यापत्तिः । तादृशेच्छायां[5] परामर्शोत्तेजकविरहादिति धूम-परामर्शत्वादिना हेतुताकल्पनं विनैवोपपत्तेरिति । नचैकत्र द्वयमिति रीत्या एकत्र विशिष्टेऽपरविशिष्टमिति रीत्या वा धूमलिङ्गकत्वोभयादिप्रकारकानुमि-त्साविशिष्टसिद्धिकाले तथाविधै[6]कमात्रलिङ्गकपरामर्शादनुमित्यापत्तिः, तादृ[7]-शेच्छाया अप्युपदर्शित[8]सम्बन्धेन तथाविध[9]परामर्शत्वविशिष्टत्वादिति । धूमादिलिङ्गकानुमितित्वावच्छिन्नं प्रति धूमान्यलिङ्गकत्वप्रकारत्वानिरूपिता-नुमितिनिष्ठविशेष्यताकेच्छाविरहविशिष्टसिद्ध्यभावत्वादिना हेतुताकल्पन-मावश्यकमिति वाच्यम् ।

स्वा[10]वच्छिन्नलिङ्गकत्वप्रकारतानिरूपितत्वस्वभिन्नधर्मावच्छिन्न-लिङ्गकत्वप्रकारतानिरूपितत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टान्या या स्वीयव्याप्तिकारतानिरूपितप्रकारतावच्छेदकधर्मावच्छिन्नलिङ्गकत्वप्रकारका-नुमितिनिष्ठविशेष्यता तन्निरूपकत्वस्वसामानाधिकरण्योभयसम्बन्धेन पराम-र्शवैशिष्ट्यस्येच्छायां निवेशनीयतया उपदर्शितेच्छानिरूपितानुमिति-निष्ठविशेष्यतायाः निरुक्तोभयसम्बन्धेन धूमत्वादिविशिष्टतया ता-

---

१ तादृश = वह्निव्याप्यधूमवान् पर्वत इत्याद्याकारक । २ स्वीय = परामर्शीय । ३ तादृशोभय = स्वीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपिता या व्याप्यप्रकारता तदवच्छेदकधर्मावच्छिन्न-लिङ्गकत्वप्रकारकत्वस्वसामानाधिकरण्योभय । ४ तथाविधेच्छा = धूमत्वाद्यवच्छिन्नलिङ्गकत्व-प्रकारकेच्छा । ५ तादृश = धूमत्वाद्यवच्छिन्नलिङ्गकत्वप्रकारक । ६ परामर्शात् = वह्निव्या-प्यधूमवान् पर्वत इति परामर्शात् । ७ तादृश = उभयादिप्रकारक । ८ उपदर्शित = स्वीयप-र्वतत्वावच्छिन्नविशेष्यतानिरूपितेत्याद्युभय । ९ तथाविध = एकमात्रलिङ्गक । १० स्व = किञ्चिद्धर्म ।

दृशेच्छायामुक्त[1]सम्बन्धेन परामर्शवैशिष्ट्याभावादापत्त्यभावादिति । एवञ्च साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानत्वेन हेतुतामते हेतुतावच्छेदक-धर्मावच्छिन्नलिङ्गकत्वप्रकारकानुमितिनिष्ठविशेष्यता तन्निरूपकत्वस्वसा-मानाधिकरण्योभयसम्बन्धेन परामर्शवैशिष्ट्यस्येच्छायां निवेशनीयतया उपदर्शितेच्छानिरूपितानुमितिनिष्ठविशेष्यतायाः निरुक्तोभयसम्बन्धेन धूमत्वादिविशिष्टतया तादृशेच्छायामुक्तसम्बन्धेन परामर्शवैशिष्ट्याभावा-दापत्त्यभावादिति । एवञ्च साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानत्वेन हेतुतामते हेतुतावच्छेदकभेदेन परामर्शहेतुत्वाभावादिति, अनुमिति-सामग्रीप्रतिबन्धकताभेदाभावप्रयुक्तलाघवमक्षुण्णमेवेति । इदं पुनरि-हावधेयम्, यदि निश्चयत्वनिर्वचनानुरोधयितुमीशामहे, तथा हि व्यापक-सामानाधिकरण्यरूपव्याप्त्यवगाहिपरामर्शस्य स्वावाच्छिन्नप्रतियोगिताका भावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छि-न्नप्रतियोगितावच्छेदकताकस्वावच्छिन्नप्रतियोगिताकभेदवत्त्वस्वावच्छिन्नव्या-पकतावच्छेदकवह्नित्वावच्छिन्ननिरूपितसामानाधिकरण्यावच्छिन्ना या स्वा-वच्छिन्ना प्रकारता तन्निरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वसम्बन्धेन किञ्चिद्धर्मविशिष्टज्ञानत्वरूपनिर्णयत्वेन हेतुता कल्प्यते । धूमव्यापकवह्निस-मानाधिकरणधूमवान् पर्वत इत्यादिपरामर्शश्च तादृश[2]सम्बन्धेन धूमत्वादि-विशिष्ट एवातः [3]तस्मादनुमितिरुत्पद्यते ।

धूमव्यापकवह्निसमानाधिकरणालोकवान् पर्वत इत्यादिनिर्णयश्च न [4]तादृशसम्बन्धेन केनचिद्धर्मेण विशिष्टः, [5]तादृशज्ञानीयपक्षविशेष्यतानिरू-पितालोकत्वावच्छिन्नप्रकारतायाः आलोकत्वावच्छिन्नव्यापकतावच्छेदक-वह्नित्वावच्छिन्नसामानाधिकरण्यावच्छिन्नत्वविरहात् स्वपदेनालोकत्वस्योपा-दातुमशक्यत्वात्, धूमत्वावच्छिन्नत्वविरहाच्च, स्वपदेन धूमत्वस्याप्युपादातु-मशक्यत्वादिति ।

---

१ उक्त = निरुक्तोभय । २ तादृश = निरुक्तविशेष्यताकत्वसम्बन्धेन । ३ तस्मात् = तादृश-परामर्शात् । ४ तादृश = विशेष्यताकत्व । ५ तादृश = धूमव्यापकवह्निसमानाधिकरणालो-कवान् पर्वत इत्याकारक ।

स्वावाच्छिन्नव्यापकतावच्छेदकवह्नित्वावच्छिन्ननिरूपितसामानाधिकरण्यावच्छिन्नेत्यस्य स्वनिष्ठावच्छेदकतानिरूपकं यद्धेतुनिष्ठमवच्छेदकत्वं तन्निरूपितं यदधिकरणनिष्ठमवच्छेदकत्वं तन्निरूपितं यदभावनिष्ठमवच्छेदकत्वं तन्निरूपितं यत् प्रतियोगित्वनिष्ठमवच्छेदकत्वं तन्निरूपितं यदवच्छेदकत्वनिष्ठमवच्छेदकत्वं तन्निरूपितं यत् प्रतियोगित्वनिष्ठमवच्छेदकत्वं तन्निरूपितं यदभावनिष्ठमवच्छेदकत्वं तन्निरूपितं यत् वह्निनिष्ठमवच्छेदकत्वं तन्निरूपितं यदधिकरणनिष्ठमवच्छेदकत्वं तन्निरूपितं यदाधेयत्वनिष्ठमवच्छेदकत्वं तन्निरूपितेत्यर्थः। वास्तवतादृशसा[1]मानाधिकरण्यावच्छिन्नत्वमते वह्निसमानाधिकरणधूमवान् पर्वत इत्यादिनिर्णयादनुमित्युत्पादापत्तेः, इन्धनव्यापकवह्निसमानाधिकरणेन्धनवान् पर्वत इत्यादिपरामर्शादनुमित्यनुदयापत्तेश्च। नीलधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानादनुमित्यापत्तिवारणाय च स्वनिष्ठावच्छेदकत्वे[2] स्वनिरूपकतावच्छेदकतानिरूपकत्वसम्बन्धेनावच्छेदकताविशिष्टान्यत्वं विशेषणीयम्।

नीलधूमत्वावच्छिन्नलिङ्गकपरामर्शादीनाञ्च पृथगेव हेतुता वाच्या। साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानहेतुतावादिनापि स्वतन्त्रहेतुतायाः स्वहसितत्वात्। एवम् जातिविशेषवत्समानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानादनुमित्यापत्तिवारणाय च निरवच्छिन्नत्वं स्वनिष्ठावच्छेदकतायां[3] निवेश्यम्।

जातिविशेषत्वादिना धूमत्वादिहेतुतावच्छेदकस्थले च पृथगेव हेतुत्वं, भवतापि पृथक्कारणतायाः स्वहसितत्वात्। एवम् धूमसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानादप्यनुमित्यापत्तिवारणाय चाधेयत्वनिष्ठावच्छेदकतायामपि स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेनाभावत्वान्यनिष्ठावच्छेदकताविशिष्टान्यत्वं निवेशनीयमिति। एवञ्च सामग्रीप्रतिबन्धकतायामपि हेतुता-

---

१ तादृश = हेतुव्यापकसाध्य। २ स्व = हेतुतावच्छेदक। ३ स्व = हेतुतावच्छेदक।

वच्छेदकं विशिष्य निवेश्योपदर्शितव्याप्यपरामर्शसम्भवात् सामग्रीप्रतिबन्धकताधिक्यमपि नास्ति, इत्थञ्च शरीरगौरवस्य प्रागेवाप्रयोजकीकृतत्वात् व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञान मेवहेतुरिति निराबाधमेव विशेषदर्शिनां केवलान्वय्यनुमानमिति ।

स्यादेतत् व्यापकसामानाधिकरण्यज्ञानस्यानुमितिहेतुत्वमते पर्वतो वह्निमानित्याकारकस्वरूपतो वह्नित्वादिरूपविधेयतावच्छेदकावगाह्यनुमितिर्दुरुपपादा, तथा हि धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इत्याकारकपरामर्शस्यैवै[1] तन्मतेऽनुमितिहेतुता, तस्मात्[2] वह्नित्वत्वादिना वह्नित्वाद्यवगाह्यनुमितिरेव भवितुमर्हति परामर्शस्य यद्रूपावच्छिन्ने साध्यतावच्छेदकावगाहित्वं तद्रूपपुरस्कारेणैव विधेयतावच्छेदकावगाह्यनुमितिजनकत्वमिति भवताप्यवश्यमेव स्वीकरणीयम्, अन्यथा[3] तादृश[4]प्रतियोगितानवच्छेदकजातिमत्समानाधिकरणधूमवान् पर्वत इत्यादिपरामर्शादपि पर्वतो वह्निमानित्येतादृशानुमित्यापत्तेः ।

अथ जातित्वावच्छिन्ने तादृशप्रतियोगितानवच्छेदकत्वावगाहितादृशपरामर्शस्य जातित्वावच्छिन्नविधेयतावच्छेदकताकानुमितित्वमेव जन्यतावच्छेदकमतो न तस्मात्[5] स्वरूपतो वह्नित्वादिविषयिण्यनुमितिः,वह्नित्वाद्यवच्छिन्नप्रतियोगितावच्छेदकत्वावगाहिनः परामर्शात्तु तादृशानुमितिः सम्भवत्येव, तादृशानुमितित्वस्यैव तथाविधपरामर्शजन्यतावच्छेदकत्वोपगमात् इति चेत् तर्हि वह्नित्ववद्वान् पर्वत इत्येतादृशवह्नित्वत्वावच्छिन्नविधेयतावच्छेदकताकानुमितिविलोपप्रसङ्गः,स्वरूपतो वह्नित्वादिविधेयतावच्छेदकताकानुमितित्वस्यैव तथाविधानुमितिजनकपरामर्शजन्यतावच्छेदकतायाः स्वीकृतत्वात् ।

अथ तथाविधानुमितित्वमपि जन्यतावच्छेदकमिति चेत् तर्हि पर्वतो वह्निमान् वह्नित्ववद्वांश्चेति द्विविधविषयताशाल्यनुमितिरेवासति बाधके नियमतः स्यान्न तु

---

१ एतन्मते = व्यापकसामानाधिकरण्यरूपव्याप्तेः कारणतावादिमते । २ तस्मात् = तादृशपरामर्शात् । ३ अन्यथा = तादृशनियमास्वीकारे । ४ तादृश = धूमसमानाधिकरणाभाव ।
५ तस्मात् = जातित्वावच्छिन्नधर्मिकतादृशप्रतियोगितानवच्छेदकत्वावगाहिपरामर्शात् ।

कदाचित् केवलपर्वतो वह्निमानित्याकारिकेति तच्चानुभवविरुद्धम्[1]। साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्य हेतुतामते यत्राभावप्रतियोगितावच्छेदकतया स्वरूपतो वह्नित्वादिकं भासते, तत्रानुमितावपि स्वरूपत एव तद्भासते[2], यत्र तु वह्नित्वत्वादिना तत्रानुमितावपि तथैवेति[3] नियमः सम्भवति।

यत्तु अनवच्छेदकत्वांशे निर्द्धर्मितावच्छेदकपरामर्शः स्वरूपतो वह्नित्वादिविधेयतावच्छेदकताकानुमितौ हेतुः, वह्नित्वत्वाद्यवच्छिन्नविधेयतावच्छेदकताकानुमितौ च वह्नित्वत्वाद्यवच्छिन्नानवच्छेदकत्वावगाहिपरामर्श इति नानुमितेर्द्विविधविषयताशालित्वप्रसङ्ग इति तदसत्, अनवच्छेदकत्वांशे निर्द्धर्मितावच्छेदकबोधस्य व्यभिचारज्ञानाप्रतिबध्यतया तस्यानुमितिहेतुत्वे[4] व्यभिचारस्य हेत्वाभासत्वानुपपत्तिरिति। मैवम्, सामानाधिकरण्यनिरूपकतावच्छेदकतया स्वरूपतो वह्नित्वाद्यवगाहिहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्ववद्वह्निसमानाधिकरणधूमवान् पर्वत इत्याकारकपरामर्शः स्वरूपतो वह्नित्वादिविधेयतावच्छेदकानुमितौ हेतुः, यत्र वह्नित्वत्वादिनैव वह्नित्वादिसामाधिकरण्यं निरूपकतावच्छेदके भासते न तु स्वरूपतः, तादृशपरामर्शस्तादृशप्रतियोगितावच्छेदकवह्नित्ववत्समानाधिकरणधूमवान्[5] पर्वत इत्याकारकः वह्नित्ववद्वानित्यनुमितौ हेतुरिति न कदाचिदप्यनुपपत्तिः।

अथैवं प्रात्यक्षिकपरामर्शात् केवलं पर्वतो वह्नित्ववद्वानित्यनुमितिदुर्लभा, तादृशपरामर्शे[6] समानाधिकरणनिरूपकतावच्छेदकविधया स्वरूपतो वह्नित्वादिभाने बाधकाभावात्।

न च स्वरूपतो वह्नित्वादिविशिष्टबुद्धौ स्वरूपतो वह्नित्वाद्युपस्थितेर्हेतुत्वात्, तत्[7] शून्यकालीनपरामर्श एव न तथा वह्नित्वादिकं भासितुमिष्टमिति वाच्यम्। स्व-

---

१ तच्च = तादृशानुमित्युत्पत्तिश्च। २ तत् = वह्नित्वादि। ३ तथैव = वह्नित्वत्वादिनैव। ४ तस्य = अनवच्छेदकत्वांशे निर्द्धर्मितावच्छेदकबोधस्य। ५ तादृश = हेतुसमानाधिकरणाभावीय। ६ तादृश = प्रात्यक्षिक। ७ तत् = स्वरूपतो वह्न्याद्युपस्थिति।

रूपतो वह्नित्वाद्युपस्थितिं विना वह्नित्वत्वादिना वह्नित्वादिभानासम्भवात्, वह्नित्वत्वभाने तच्छरीरघटकतया स्वरूपतो वह्नित्वादिभानावश्यकत्वादिति चेत् न, सामानाधिकरण्यनिरूपकतावच्छेदकमुद्रया स्वरूपतो वह्नित्वाद्यनवगाहि[1]तादृशप्रतियोगितानवच्छेदकवह्नित्ववत्समानाधिकरणधूमवान् पर्वत इत्याकारकः प्रात्यक्षिकः परामर्शः कश्चित् उत्पद्यत इति सर्वेषामनुमतमेव [2]तदुत्पादनमुभयवादिसिद्धमिति, अधिकरणं न वह्नीयमिति ज्ञानकाले तादृशपरामर्शोत्पत्तौ बाधकाभावात्, एवञ्च तत्रैव वह्नित्ववद्वानित्याकारकानुमितिः निराबाधमेवेत्यलमसदावेशेनेति ।

यत्तु व्यापकत्वं [3]स्वप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवत्त्वं, स्वपदार्थो नाभावसामान्यं, अभावसामान्यप्रतियोग्यनधिकरणीभूतहेतुमतः सर्वत्रैवाप्रसिद्धेरतस्तत्तदभाव एव स्वपदार्थो वाच्यः । तथा च तत्तदभावप्रतियोग्यनधिकरणहेतुमन्निष्ठतत्तदभावप्रतियोगितावच्छेदकभेदकूटवत्साध्यतावच्छेदकावच्छिन्नत्वमेव [4]तदिति निष्कृष्टार्थः । एवञ्च [5]तादृशभेदकूटस्य प्रातिस्विकरूपेण युगसहस्रेणाप्यशक्यज्ञानमिति व्यापकसामानाधिकरण्यरूपव्याप्तेर्दुर्ज्ञेयत्वमिति कथं [6]तज्ज्ञानस्य हेतुत्वम्, न च भेदकूटस्य प्रातिस्विकरूपेण दुर्ज्ञेयत्वेऽपि सामान्यतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकप्रतियोगिताकभेदत्वादिना ज्ञानसम्भवात् न [7]तादृशव्याप्तेर्दुर्ज्ञेयतेति वाच्यम् । व्यभिचारज्ञानाप्रतिबध्यस्य तादृशसामान्यरूपेण ज्ञानस्यानुपयोगितयाऽकिञ्चित्करत्वात् ।

न च साध्याभाववदवृत्तित्वरूपव्याप्तेरपि साध्याभावे [8]स्वप्रतियोग्यनधिकरणवृत्तित्वस्य निवेशनीयतया तुल्यानुयोग इति वाच्यम् । तत्र प्रतियोगिपदस्य साध्यपरत्वेनानुगमात् तत्तुच्छम् । अभावान्तरस्य स्वनिरूपकाभाव-

---

१ तादृश = हेतुसमानाधिकरणाभावीय । २ तत् = प्रात्यक्षिकपरामर्श । ३ स्व = अभाव । ४ तत् = व्यापकत्वम् । ५ तादृश = तत्तदभावप्रतियोगितावच्छेदक । ६ तज्ज्ञानस्य = व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्य । ७ तादृश = व्यापकसामानाधिकरण्यरूप । ८ स्व = अभाव ।

निरूपितत्वस्वा[1]वच्छेदकावच्छिन्नाधिकरणानुयोगिकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्या या हेत्वधिकरणनिष्ठाधिकरणता तन्निरूपकाभावार्थकतयाऽनुगमात् ।

संयोगी द्रव्यत्वादित्यादौ द्रव्यादिनिष्ठसंयोगाभावाधिकरणता तादृशोभयसम्बन्धेन संयोगत्वाद्यवच्छिन्नप्रतियोगिताविशिष्टैव, तद[2]वच्छेदकीभूतसंयोगत्वाद्यवच्छिन्नाधिकरणानुयोगिकत्वात् तन्निरूपकीभूतसंयोगाभावादिनिरूपितत्वाच्च, अतस्ता[3]दृशसम्बन्धेन प्रतियोगिताविशिष्टान्या घटाभावाधिकरणतैव, तादृशाधिकरणतायाः यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणानुयोगिकत्वं तादृशप्रतियोगितानिरूपकाभावनिरूपितत्वाभावेनोक्तसम्बन्धद्वयेन कस्याश्चिदपि प्रतियोगितायास्तत्र वैशिष्ट्यम्, ता[4]दृशाधिकरणतानिरूपकाभावप्रतियोगितानवच्छेदकत्वञ्च संयोगत्वादावक्षतमेवेति न तत्राव्याप्तिः ।

संयोगी सत्वादित्यादौ द्रव्यनिष्ठसंयोगाभावाधिकरणतायास्तादृ[5]शोभयसम्बन्धेन प्रतियोगिताविशिष्टत्वेऽपि गुणाद्यात्मकहेत्वधिकरणता न तथाविधा, अभावाधिकरणभेदेनाधिकरणताभेदादिति न तत्राव्याप्तिरिति । वस्तुतस्तु हेत्वधिकरणनिरूपितनिरवच्छिन्नाधेयत्वस्याभावविशेषणत्वेनैवोपपत्तेः प्रतियोगिवैयधिकरण्यनिवेश एव नास्तीति नाननुगमसम्भावना । अथैवमपि लघु[6]रूपसमनियतगुरु[7]रूपधर्मावच्छिन्नसाध्यकव्यभिचा[8]रिण्यतिव्याप्तिवारणाय स्व[9]विशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं यद्यद्धेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं तावद्भेदकूटविशिष्टसाध्यतावच्छेदकवत्त्वमेव व्यापकत्वमित्यवश्यं वाच्यम्, तथा[10] च दुर्वारैव दुर्ज्ञेयतेति चेत् ।

---

१ स्व = प्रतियोगिता । २ तत् = प्रतियोगिता । ३ तादृशोभय = निरुक्तोभय । ४ तादृश = निरुक्तोभयसम्बन्धेन प्रतियोगिताविशिष्टान्याऽधिकरणता । ५ तादृशोभय = स्वनिरूपकाभावनिरूपितत्वस्वावच्छेदकावच्छिन्नाधिकरणानुयोगिकत्वोभय । ६ लघु = घटत्व । ७ गुरु = कम्बुग्रीवादिमत्त्व । ८ व्यभिचारिणि = कम्बुग्रीवादिमान् द्रव्यत्वात् इत्यादौ । ९ स्व = घटत्वादि । १० तथा च = एतादृशरीत्या व्यापकत्वनिर्वचने च ।

भवन्मतेऽपि तादृशगुरुधर्मावच्छिन्नसाध्यकसद्धेतौ[1] साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाऽप्रसिद्ध्याऽव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नाभाववदवृत्तित्वं विवक्षणीयम् । तत्र गुरुधर्मस्य[2]ानवच्छेदकत्वमते तादृशप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकतन्निवेशनमावश्यकम्, कम्बुग्रीवादिमत्त्वावच्छिन्नसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादेः समनियतघटत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वापेक्षया गुरुत्वेन भेदप्रतियोगितानवच्छेदकत्वात्तदवच्छिन्न[3]प्रतियोगिताकभेदाऽप्रसिद्धेरिति प्रतियोगितावच्छेदकव्यक्तीः प्रातिस्विकरूपेणोपादाय तावतां भेदकूट एव निवेश्यत इति तुल्यन्यायायोगः । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमतावलम्बने समस्समाधिरिति न किञ्चिदेतत् ।

इदन्तु तत्त्वं,सर्वत्र व्यापकसामानाधिकरण्यावगाहिपरामर्शादेवानुमितिरिति न नियमः, परन्तु क्वचित्ततः[4] क्वचिच्च साध्याभाववदवृत्तित्वावगाहिपरामर्शादपीत्यनियमपक्ष एव साधीयान्[5] । तादृशनियम[6]मते वह्न्यभाववदवृत्तिमत्पर्वतत्वावच्छिन्नपक्षकघटाद्यनुमितिसामग्रीणां विभिन्नविषयकप्रत्यक्षादिप्रतिबन्धकताबाहुल्यप्रसङ्गात् ।

मन्मते[7] वह्न्यभाववदवृत्तिमान् पक्ष इत्येतादृशपरामर्शघटितवह्न्याद्यनुमितिसामग्र्याः तत्रावश्यकत्वात्, तादृश[8]परामर्शघटितसामग्रीप्रतिबन्धकतयैवोपपत्तेः, तादृश[9]प्रतिबन्धकत्वाकल्पनात् ।

अथ वह्न्यनुमितिसामग्र्यां पर्वतो वह्न्यभाववानित्येतादृशबाधाद्य-

---

१ सद्धेतौ = कम्बुग्रीवादिमान् घटत्वादित्यादौ । २ गुरुधर्मस्य = कम्बुग्रीवादिमत्त्वादेः । ३ तदवच्छिन्न गुरुधर्मावच्छिन्न । ४ ततः = व्यापकसामानाधिकरण्यावगाहिपरामर्शात् । ५ साधीयान् = श्रेष्ठः । ६ तादृशनियम = व्यापकसामानाधिकरण्यावगाहिपरामर्शादेवानुमितिनियम । ७ मन्मते = अनियमपक्षवादिमते । ८ तादृश = वह्न्यभाववदवृत्तिमान् पक्ष इत्येतादृश । ९ तादृश = विभिन्नविषयकप्रत्यक्षादि ।

भावस्यावश्यं निवेशनीयतया तादृशबाधादिकाले[1] तथाविधघटादिविषयकानुमितिकाले विभिन्नविषयकप्रत्यक्षादिवारणाय तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनमावश्यकमिति चेत्, सत्यं, तादृशयुक्त्या शुद्धघटत्वावच्छिन्नविधेयताकतादृशविशिष्टधर्मावच्छिन्नपक्षकानुमितिसामग्रीणां प्रतिबन्धकत्वमुभयवादिसिद्धमिति। एवमपि तादृशविशिष्टधर्मपक्षकवह्निमत्पर्वतवृत्तिघटत्वाद्यवच्छिन्नविधेयताकानुमितिसामग्रीणां प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवमक्षुण्णमेव। तादृशानुमितेः पर्वतो वह्न्यभाववानित्येतादृशबाधादिप्रतिबध्यतया तत्सामग्रीकाले बाधाद्यभावघटितपर्वतत्वाद्यवच्छिन्नपक्षकवह्न्याद्यनुमितिसामग्र्या अवश्यम्भावात्।

अथैवमपि पर्वतो वह्निमानित्येतादृशसिद्ध्यभावनिवेशस्यावश्यकतया तथाविधघटानुमितिसामग्रीकाले विभिन्नविषयकप्रत्यक्षवारणाय तादृशसामग्र्याः[2] प्रतिबन्धकत्वकल्पनमावश्यकमिति चेत्, एवमपि पर्वतविशेष्यकवह्निमत्तानिर्णयस्य भ्रमत्वं, साध्यतावच्छेदककोटौ पक्षतावच्छेदककोटौ वा यत्राधिकं निविष्टं तादृशानुमितिसामग्र्याः[3] प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवं दुर्वारमेव। तादृशानुमितिकाले[4] पर्वतो वह्निमानित्येतादृशसिद्धौ भ्रमत्वग्रहस्यावश्यकतयाऽप्रामाण्यज्ञानानास्कन्दितसिद्ध्यभावघटितसामग्र्या आवश्यकत्वात्।

नचैवम्, साध्याभाववदवृत्तित्वादिरूपव्याप्तिज्ञानादेवानुमितिरस्तु, न तु व्यापकसामानाधिकरण्यावगाहिज्ञानादिति वाच्यम्, व्यापकसामानाधिकरण्यावगाहिज्ञानादनुमितिस्वीकारेऽपि धूमव्यापकवह्निसमानाधिकरणधूमवत्पर्वतपक्षकघटाद्यनुमितिसामग्र्या विभिन्नविषयकप्रत्यक्षादिकं प्रति प्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवसम्भवात्।

एवं साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपज्ञानस्याप्यनुमितिहेतुत्वमुपेयते, तथासत्युक्तरीत्या लाघवसम्भवादिति। केचित्तु अन्व-

१ तादृश = पर्वतो वह्न्यभाववान् इत्यादि। २ तादृश = अनुमिति। ३ तादृशानुमिति = साध्यतावच्छेदकांशे पक्षतावच्छेदकांशे वा अधिकावगाह्यनुमिति। ४ तादृशानुमिति = अधिकावगाह्यनुमिति।

यन्व्याप्तिज्ञानात् पर्वतो वह्निमानित्याकारिका व्यतिरेकव्याप्तिज्ञानात् पर्वतो वह्न्यभावाभाववानित्याकारिकाऽनुमितिर्जायते ।

अथोभयविध[1]व्याप्तिज्ञानादेकविधानुमित्यभ्युपगमेपि न क्षतिविरहः, परामर्शवैशिष्ट्यस्य कार्यतावच्छेदककोटावश्यं निवेशनीयतयैव परस्परव्यभिचाराप्रसक्तेः ।

न चोभयविधव्याप्तिज्ञानात् पर्वतोवह्निमानित्येतादृशानुमितिस्वीकारे सिद्धिप्रतिबन्धकतायामिच्छाविशिष्टपरामर्शाणामुत्तेजकतामते पर्वतोवह्निमानित्येतादृशसिद्धेः प्रतिबन्धकतामतेऽन्वयव्यतिरेकव्याप्त्यवगाहिपरामर्शयोरेकत्र प्रसक्त्या तदभावयोर्विशेष्यविशेषणभावेन विनिगमनाविरहप्रयुक्तप्रतिबन्धकताधिकरणमिति वाच्यम् ।

व्यतिरेकव्याप्तिज्ञानात् पर्वतो वह्न्यभावाभाववानित्येतादृशानुमितिस्वीकारेऽपि पर्वतो वह्न्यभावाभाववानित्येतादृशसिद्धिप्रतिबन्धकतायामेकत्र वह्न्यभावाभावत्वावच्छिन्ननिरूपितान्वय व्याप्तिविषयकपरामर्शोपदर्शितव्यतिरेकव्याप्तिवगाहिपरामर्शयोरुत्तेजकत्वप्रसङ्गेन च तद्दोषतादवस्थ्यात् तादृशान्वयव्याप्तिज्ञानादपि पर्वतो वह्न्यभावाभाववानित्येतादृशानुमित्युत्पत्तेः ।

किञ्च तन्मते[2] व्यतिरेकव्याप्त्यवगाहिपरामर्शजन्यानुमितौ अभावो न साध्यीय इत्याकारकबाधाभावस्याधिकस्य हेतुतया ताद्[3]दृशपरामर्शघटितसामग्रीप्रतिबन्धकतायां तथाविध[4]बाधाद्यभावनिवेशस्याधिक्यात गौरवमिति, मैवम्, व्यतिरेकपरामर्शतो वह्न्यभावाभाववानित्येतादृशानुमितिस्वीकारे प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावविशिष्टाभाववैशिष्ट्यावगाहिव्यतिरेकव्याप्त्यवगाहिपरामर्शघटितानुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवं, तादृ[5]शपरामर्शघटितानुमितिसामग्रीकालेऽभावो न वह्नीय इत्याकारकबाधबुद्धेरभावस्यावश्यकतया विशेषणतावच्छेदकप्रकारकनिर्णयरूपकारणविरहादेव तादृशविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिवारणसम्भवादित्याहुः ।

---

१ उभयविध = अन्वयव्यतिरेकोभयविध । २ एतन्मते = उभयविधव्याप्तिज्ञानादेकविधानुमितिस्वीकर्तृमते । ३ तादृ = व्यतिरेकव्याप्त्यवगाहिः । ४ तथाविध = अभावोन साध्यीय इत्याकारकः । ५ तादृशः = व्यतिरेकव्याप्त्यवगाहिपरामर्शः ।

मीमांसकमतानुयायिनस्तु, व्यतिरेकव्याप्तिज्ञानादर्थापत्त्याख्यविलक्षणप्रमितिरेवोत्पद्यते, नत्वनुमितिः, तदनन्तरम्[1] अर्थापद्यामीति विलक्षणानुव्यवसायस्यैवोपपत्तेरनुव्यवसायबलादेव व्याप्यवत्तानिर्णयाधीनप्रत्यक्षात्मकसाध्यनिर्णयादेव प्रवृत्त्यादिकार्यनिर्वाहेऽनुमित्यात्मकविलक्षणप्रमितेरसिद्ध्यापत्त्या नानुमानस्यापि पृथक्प्रमाणतोपपत्तिरिति व्यतिरेकव्याप्तिज्ञानं प्रमाणान्तरमेव । न चानुव्यवसायान् व्यतिरेकव्याप्तिज्ञानजन्यविलक्षणप्रमितौ सिद्ध्यतु जातिविशेषः,-सत्तानुमितित्वव्याप्य एवेति व्यतिरेकव्याप्तिज्ञानस्य प्रमाणान्तरत्वमिति वाच्यं, तादृश[2]जातेरनुमितित्वव्याप्यत्वे मानाभावात्, नार्थापत्तित्वस्यानुमितित्वविरुद्धत्वे सिद्धिकाले तद्वारणाय तत्र सिद्ध्यभावस्य कारणान्तरत्वं प्रकल्प्यमनुमितित्वव्याप्यत्वेऽमितित्वावच्छिन्नं प्रति हेतुत्वकल्पनयैवोपपत्तेर्लाघवमिति वाच्यं, सिद्धिकालेऽर्थापत्त्यभ्युपगमे क्षतिविरहात् ।

वस्तुतस्तु सिद्धिकालेऽर्थापत्त्यनुत्पादस्य प्रामाणिकत्वे भवन्मतेऽपि तत्र[3] सिद्धेः पृथक् प्रतिबन्धकत्वकल्पनमावश्यकम्, अर्थापत्तित्वप्रकारकेच्छाधीनानुमितौ व्यभिचारवारणायानुमित्साविरहविशिष्टसिद्ध्यभावजन्यतावच्छेदककोटावर्थापत्तिव्यावृत्तव्यतिरेकव्याप्तिज्ञानाजन्यत्वपक्षेऽप्यावश्यकतया अनुमितिस्थलीयप्रतिबन्धकतया अर्थापत्तिवारणासम्भवात् ।

न चार्थापत्तित्वप्रकारकेच्छासाधारणानुमितिविषयकेच्छात्वेनैवानुमित्साया उत्तेजकत्वेन नैतादृशेच्छाधीनार्थापत्तावनुमित्साविरहविशिष्टसिद्ध्यभावस्य व्यभिचार इति वाच्यम्, अर्थापत्तित्वप्रकारकेच्छासाधारणरूपेणानुमित्साया उत्तेजकत्वे तादृशेच्छाकाले व्यतिरेकव्याप्तिज्ञानासत्त्वे सिद्धिसत्त्वेऽनुमित्यापत्तिः ।

अथानुमित्साया इव तादृशेच्छाया[4] अपि व्यतिरेकपरामर्शविशिष्टतथाविधेच्छात्वेन[5] पृथगुत्तेजकत्वमिति चेत्तदपेक्षया[6] अर्थापत्तावर्थापत्तीच्छाविरहविशिष्टसिद्धेः प्रतिबन्धकत्वमेव कल्पयितुमुचितमित्याहुः ।

---

१ तदनन्तरं = व्यतिरेकव्याप्तिज्ञानानन्तरम् । २ तादृश = सत्ताख्य । ३ तत्र = सिद्धिस्थले । ४ तादृशेच्छा = अर्थापत्तित्वप्रकारकेच्छा । ५ तथाविधेच्छात्वेन = अर्थापत्तित्वप्रकारकेच्छात्वेन । ६ तदपेक्षया = उक्तरूपेणोत्तेजकत्वापेक्षया ।

इत्थञ्चार्थापत्तित्वस्यानुमितित्वविरुद्धत्वे प्रमाणद्वयसामग्रीसत्त्वदशायामर्थापत्तिरनुमितिर्वा किं करणीया इत्यत्र विनिगमनाविरहः, उभयोपगमे[1] च व्यक्तिकल्पनगौरवात् व्यक्तिपौर्वापर्यादिनियामककारणाधिक्यञ्च. न च तत्र[2] किमपि नोत्पद्यत इति वाच्यम्, ज्ञानसामान्यानुत्पादस्यानुभवविरुद्धत्वात् सामग्रीसत्त्वे कार्योत्पादस्यावश्यकत्वाच्च ।

इति महामहामहोपाध्यायहरिरामविरचितनव्यमतरहस्यं समाप्तिमगात् । कंकनपुरावस्थितकरमहाश्रीशूलपाणेरक्षरमिदम् शाके १६७७ ।

—: समाप्तम् :—

१ उभयोपगमे = अर्थापत्तिरनुमितिरित्युभयस्वीकारे । २ तत्र = सामग्रीद्वयस्थले ।

## अथ ज्ञानद्वयकारणताविचारः ॥

ॐ नमस्सरस्वत्यै ।

अथानुमिति[1]म्प्रति साध्य[2]व्याप्यत्वावच्छिन्नहेतु[3]प्रकारतानिरूपितपक्ष[4]विशेष्यताशालिज्ञानत्वरूपविशिष्टपरामर्श[5]त्वेन न हेतुता गौरवात् किन्तु व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन च हेतुताद्वयम् । इत्थञ्च[6] धूमो वह्निव्याप्यो धूमवान् पर्वत इत्याकारकज्ञानद्वयात्तथाविधसमूहालम्बनादपि सर्वत्रानुमितिरुत्पद्यते, न केवलविशिष्टपरामर्शादेव । अत्र धूमो वह्निव्याप्यो धूमवान् पर्वत इत्यादिपरामर्शादिव धूमो वह्निव्याप्य आलोकवान् पर्वत इत्याकारकज्ञानादप्यनुमित्यापत्तिः, धूमत्वालोकत्वयोरेव च व्याप्यतावच्छेदकत्वादिति तु नाशङ्कनीयम, यतो व्याप्यतावच्छेदकत्वेन धूमत्वादिकं निवेश्य कार्यकारणभावन्न प्रकल्पयामः, किन्तु विशिष्यधूमलिङ्गकानुमितिम्प्रति धूमत्वावच्छिन्नव्याप्तिप्रकारकज्ञानत्वेन, धूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकज्ञानत्वेन हेतुतेत्यतो नोपदर्शितापत्ति[7]प्रसङ्गः ।

तद्धर्मा[8]वच्छिन्नविशेष्यकव्याप्तिज्ञानतद्धर्मावच्छिन्नविशेष्यकपक्षधर्मताज्ञानयोर्दण्डचक्रादिव मिलितयोरेव फलोपधायकत्वात् ।

---

१ अनुमिति = पर्वतादिपक्षकवह्न्यादिसाध्यकधूमादिहेतुकपर्वतो वह्निमानित्याद्यनुमितिम् । २ साध्यं = वह्न्यादि । ३ हेतुः = धूमादिः । ४ पक्षः = पर्वतादिः । ५ विशिष्टपरामर्शः = वह्निनिरूपितव्याप्तिविशिष्टधूमवानित्याकारकपरामर्शः । ६ इत्थञ्च = हेतुताद्वयकल्पने च । ७ उपदर्शितापत्तिः धूमो वह्निव्याप्य आलोकवान् पर्वत इत्याकाकारकज्ञानादनुमित्यापत्तिः । ८ तद्धर्मः धूमत्वादिः ।

उपदर्शित[1]विशिष्टपरामर्शत्वावच्छेदेनैकहेतुताकल्पनेनैव तादृशकारणताद्वयकल्पनापेक्षया लघीयसीत्यपि न, तादृशहेतुताद्वय[2]कल्पनेऽपि हेतुताद्वयकल्पनप्रयुक्तबाहुल्यविरहात्। तथा हि कारणत्वञ्चाखण्डपदार्थः, किन्त्वन्यथासिद्धशून्यत्वे सति नियतपूर्ववृत्तित्वं, तत्र[3] व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वावच्छेदेन, तथाविधपक्षधर्मताज्ञानत्वावच्छेदेन च, तत्र नियतपूर्ववृत्तित्वमुभयवादिसिद्धमेव, तादृशधर्मयो[4]र्विशिष्टपरामर्शत्वव्यापकत्वात्, तदवच्छेदेन[5] नियतपूर्ववृत्तित्वे तादृशधर्मद्वया[6]वच्छेदेन तथात्वस्या[7]वश्यकत्वात्, किन्तु तादृशधर्मद्वयावच्छेदेनान्यथासिद्धशून्यत्वमात्रकल्पनमस्माकम्, विशिष्टपरामर्शत्वेन हेतुतामते च विशिष्टपरामर्शत्वावच्छेदेनान्यथासिद्धशून्यत्वं नियतपूर्ववर्त्तित्वञ्च कल्पनीयम्। एवञ्चास्माकं[8] लघुधर्मद्वयावच्छेदेनैकधर्मकल्पनम्, भवताञ्च[9] गुर्वेकधर्मावच्छेदेन धर्मिद्वयकल्पनमिति विपरीतगौरवमिति मीमांसकाः। अत्रोच्यते, नैयायिकैः धूमत्वावच्छिन्नविशेष्यकव्याप्तिज्ञानत्वादिरूपधर्मद्वयावच्छेदेन वह्न्याद्यनुमितिसामान्यनियतपूर्ववर्त्तित्वम्बाधितमेव, तथाविधान्य[10]लिङ्गकानुमितिनियतपूर्ववर्त्तितायाः तद्धर्मा[11]वच्छिन्नेऽसत्त्वात्। किन्तु तत्कार्यतावच्छेदकीभूततथाविधज्ञानद्वयविशिष्टानुमितित्वावच्छिन्ननियतपूर्ववर्त्तित्वमेव, तादृशधर्मद्वयावच्छेदेनेत्युभयवादिसिद्धं प्रकृतोपयुक्तमपि तदेव। एवञ्च विशिष्टपरामर्शकार्यतावच्छेदकीभूतविशिष्टपरामर्शाव्यवहितोत्तरानुमितित्वरूपधर्मावच्छिन्ननियतपूर्ववर्त्तित्वमपि विशिष्टपरामर्शत्वावच्छेदेनोभयवादिसिद्धमेवेति तदवच्छेदेना[12]न्यथासिद्धशून्यत्वादिकल्पनमधिकम्। एवञ्च विशिष्टपरामर्श [त्वेन] हेतुतामते एकधर्मा-

---

१ उपदर्शितः = साध्यव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपक्षविशेष्यताशाली। २ तादृशहेतुताद्वयं = व्याप्यतावच्छेदकप्रकारकव्याप्तिज्ञानत्वेन, व्याप्यतावच्छेदकप्रकारकपक्षधर्मताज्ञानत्वेन कारणताद्वयं। ३ तत्र = कारणत्वे। ४ तादृशधर्मयोः = निरुक्तव्याप्तिज्ञानत्वपक्षधर्मताज्ञानत्वयोः। ५ तदवच्छेदेन = विशिष्टपरामर्शत्वावच्छेदेन। ६ धर्मद्वयं = निरुक्तव्याप्तिज्ञानत्वपक्षधर्मताज्ञानत्वरूपधर्मद्वयं। ७ तथात्वस्य = नियतपूर्ववर्त्तित्वस्य। ८ अस्माकं = मीमांसकानां। ९ भवतां = नैयायिकानां। १० अन्यलिङ्गकः = आलोकादिलिङ्गकः। ११ तद्धर्मः = धूमत्वादिः। १२ तदवच्छेदेन = विशिष्टपरामर्शत्वावच्छेदेन।

वच्छेदेनान्यथासिद्धशून्यत्वादिकल्पनं, ज्ञानद्वयहेतुतामते तु धर्मद्वया[1]वच्छेदेनेति गौरवम् ।

अथ न्यायमते, व्याप्तिविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयताशालिज्ञानत्वेन, पक्षविषयतानिरूपितहेतुविषयतानिरूपितव्याप्तिविषयताशालिज्ञानत्वेन, पक्षविषयतानिरूपितत्वे सति व्याप्तिविषयतानिरूपितहेतुविषयताशालित्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेण हेतुताबाहुल्यमिति चेन्न, मीमांसकमते व्याप्तिज्ञानस्य, व्याप्तिविषयतानिरूपितहेतुविषयताशालिज्ञानत्वेन हेतुविषयतानिरूपितव्याप्तिविषयताशालिज्ञानत्वेन वा, पक्षधर्मताज्ञानस्य हेतुविषयतानिरूपितपक्षविषयताशालित्वेन, पक्षविषयतानिरूपितहेतुविषयताशालिज्ञानत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेण विशिष्टपरामर्श[2]हेतुतापेक्षया कारणताबाहुल्यस्यावश्यकत्वात् । अथ, मीमांसकमते, व्याप्तिविषयताकारणतावच्छेदककोटौ न निविष्टा किन्तु व्यापकत्वविषयतैव, एवञ्च पर्वतविशेष्यकवह्न्यनुमितिम्प्रति वह्नित्वावच्छिन्नविशेष्यकधूमव्यापकत्वप्रकारकज्ञानत्वेन, पर्वतत्वावच्छिन्नविशेष्यकधूमत्वावच्छिन्नप्रकारकज्ञानत्वेन हेतुता ।

नैयायिकमते च, धूमव्यापकवह्निसामानाधिकरण्यविषयतानिरूपितहेतुविषयतानिरूपितपक्षविषयताशालिज्ञानत्वादिना हेतुता एवञ्च[3] नैयायिकमते उपदर्शितविनिगमनाविरहेण कारणताबाहुल्यम्, तादृश विनिगमनाविरहात् कारणतावच्छेदककोटिप्रविष्टविषयतासमसंख्यककारणताया आवश्यकत्वात्. ज्ञानद्वय[4]कारणतावच्छेदककोटिप्रविष्टविषयतापेक्षयाऽधिकस्य सामानाधिकरण्यस्य विशिष्टपरामर्शहेतुतावच्छेदककोटिप्रविष्टत्वात् । न च व्यापकत्वविषयतामात्रस्य कारणतावच्छेदककोटिप्रविष्टत्वे धूमव्यापको वह्निर्धूमवान् पर्वत इति ज्ञानद्वयादनुमित्यापत्तिरिति वाच्यम्, इष्टत्वात् । नचैवं नैयायिकमतेऽपि पर्वतीयधूमव्यापको वह्निरित्याकारकपरामर्शस्यैव हेतुत्वं स्वीकरणीयमिति न सामानाधिकरण्यविषयताधिक्यमिति वाच्यम्, तथा सति[5], शुद्धधूमत्वावच्छिन्ननिरूपितव्यापकताग्रहदशायामनु-

१ धर्मद्वयं = तादृशव्याप्तिज्ञानत्वेन, पक्षधर्मताज्ञानत्वेनेति धर्मद्वयम् । २ विशिष्टपरामर्शः = साध्यव्याप्यत्वावच्छिन्नहेतुप्रकारतानिरूपितपक्षविशेष्यताशालिपरामर्शः । ३ एवञ्च = एवंरीत्या कारणतास्वीकारे च । ४ ज्ञानद्वयं = व्याप्तिज्ञानं, पक्षधर्मताज्ञानरूपं ज्ञानद्वयं । ५ तथासति = तादृशपरामर्शस्य कारणतास्वीकारे सति ।

मित्यनुदयापत्तेरिति चेत्, सम्भवत्येव गौरवम्, व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानहेतुतामते। वयन्तु साध्यवदन्यावृत्तित्वरूपव्याप्तिज्ञानहेतुतामवलम्बामहे इति नोपदर्शितगौरवं[1] सम्भवति। यत्तु विशिष्टपरामर्शहेतुतामते व्याप्त्यंशे निश्चयत्वस्य पक्षधर्मत्वांशे निश्चयत्वस्य चैकत्र निवेशे विनिगमनाविरहेण कारणताबाहुल्यम्।

मीमांसकमते व्याप्त्यंशे निश्चयत्वस्य व्याप्तिज्ञानहेतुतायामेव पक्षधर्मत्वांशे च निश्चयत्वस्य पक्षधर्मताज्ञानहेतुतायामेव निवेशनीयतया तयोरेकत्रानिवेशात्[2] विनिगमनाविरहाप्रसक्तेरिति, तन्न, व्याप्त्यंशे निश्चयत्वस्य मन्मते[3] कारणतावच्छेदककोटावनिवेशात्. व्याप्तिविशिष्टहेतुवैशिष्ट्यावगाहिज्ञानत्वेनैवानुमितिहेतुत्वोपगमात्, व्याप्त्यंशे संशयस्य तथाविधत्वेन तत्रानुमित्यभावात्[4]। विपरीतगौरवं त्वन्मते[5] व्याप्त्यंशे निश्चयत्वनिवेशस्यावश्यकत्वात्। अत्र मीमांसकमतानुयायिनः, विशिष्टपरामर्शत्वेन हेतुतामते व्याप्त्यभाववति व्याप्तिप्रकारकमित्याकारकव्याप्त्यंशीयाप्रामाण्यग्रहाणां पक्षधर्मत्वांशीयधूमाभाववति धूमप्रकारकमित्याकारकाप्रामाण्यग्रहाणाञ्चाभावस्यैकत्र निवेश इति विनिगमनाविरहेण गौरवम्, ज्ञानद्वयहेतुतामते[6] व्याप्त्यंशीयाप्रामाण्यग्रहाणां व्याप्तिज्ञानहेतुतायां पक्षधर्मत्वांशीयाप्रामाण्यग्रहाभावानां पक्षधर्मताज्ञानहेतुतायां निवेश इति न तेषामेकत्र निवेश इति लाघवम्।

एतन्मते[7] व्याप्त्यंशीयाप्रामाण्यग्रहाभावानां पक्षधर्मताज्ञानहेतुतायां पक्षधर्मत्वांशीयाप्रामाण्यग्रहाभावानां व्याप्तिज्ञानहेतुतायां निवेशमादाय विनिगमनाविरहो नाशङ्कनीयः, यतोऽप्रामाण्यग्रहस्य न केवलसमानाधिकरण्यसम्बन्धेनाभावो निवेशयितुं शक्यते, प्रथमपरामर्शेऽप्रामाण्यग्रहसत्त्वे तदविषयकद्वितीयपरामर्शादनुमित्यनुदयप्रसङ्गात्[8]।

किन्तु सामानाधिकरण्यविशेष्यतोभयसम्बन्धावच्छिन्नप्रतियोगिता-

---

१ उपदर्शितं = कारणताबाहुल्यरूपं। २ तयोः = निश्चयत्वयोः। ३ मन्मते = नैयायिकमते। ४ तत्र = तादृशस्थले। ५ त्वन्मते = मीमांसकमते। ६ मते = मीमांसकमते। ७ एतन्मते = मीमांसकमते। ८ तदविषयकः = अप्रामाण्यग्रहाविषयकः।

क एव तदभावो[1] निवेश्यत इति । एवञ्च[2] व्याप्त्यंशीयाप्रामाण्यग्रहाभावः पक्ष-धर्मताज्ञानहेतुतायां यदि निवेश्यते तदा व्याप्तिज्ञाने इदं ज्ञानं व्याप्यभाववति व्याप्तिप्रकारताकमित्याकारकाप्रामाण्यग्रहसत्त्वे पक्षधर्मताज्ञानादनुमित्यापत्तिः ।

पक्षधर्मत्वांशीयाप्रामाण्यग्रहाभावश्च यदि व्याप्तिज्ञानहेतुतायां निवेश्यते तदा पक्षधर्मताज्ञाने इदं ज्ञानं धूमाभाववति धूमप्रकारताकमित्याकारका-प्रामाण्यग्रहसत्त्वे स्वतन्त्रव्याप्तिज्ञानादनुमित्यापत्तिरिति ।

यत्तु, अप्रामाण्यग्रहाभावविशिष्टपरामर्शत्वेन हेतुतामते विशेष्य-विशेषणभावे विनिगमनाविरहात् तल्लिङ्गकानुमितिम्प्रति तल्लिङ्गकपरामर्शी-याप्रामाण्यग्रहाभावस्य पृथक्कारणताकल्पनमेवोचितम्, एवञ्च[3] विशिष्ट-परामर्शत्वेन हेतुतामते नानाविधाप्रामाण्यग्रहाभावानामेकत्र निवेशप्रयुक्तगौरवं न सम्भवति, तेषां[4] कारणतावच्छेदककोटावनिवेशादिति । तन्न, अप्रामाण्य-ग्रहाभावस्य स्वतन्त्रहेतुत्वे प्रथमपरामर्शेऽप्रामाण्यग्रहसत्त्वे तदनास्कन्दितद्वितीय-परामर्शादनुमित्यनुदयापत्तेः, अप्रामाण्यग्रहरूपप्रतिबन्धकसत्त्वात् ।

एवम् ज्ञानद्वयहेतुतामते[5] धूमो वह्निव्याप्य इत्येतादृशव्याप्तिज्ञानस्य धूमलिङ्गकवह्निविधेयतानुमितित्वमेव जन्यतावच्छेदकन्न तु पक्षविशेष्यता निवेश्यते प्रयोजनाभावात् लाघवाच्च ।

एवम्, धूमवान् पर्वत इति पक्षधर्मताज्ञानस्य धूमलिङ्गकपर्वतविशे-ष्यकानुमितित्वमेव जन्यतावच्छेदकं तत्र[6] साध्यविधेयता न निवेश्यते, एवमन्यत्रापि बोध्यम् । साध्यविषयतापक्षविषयतयोर्निरूप्यनिरूपकभावश्च बाधाभाव-नियम्यः, एवञ्चैकैकविधव्याप्तिज्ञानस्यैकैकसाध्यतावच्छेदकावच्छिन्नविधेयता-निवेश्यैकैकमात्रकारणताकल्पनमिति सहस्रसाध्यतावच्छेदकभेदेनानुमिति-

---

१ तदभावः = अप्रामाण्यग्रहाभावः । २ एवञ्च = उभयसम्बन्धेनाप्रामाण्यग्रहाभावनिवेशे च । ३ एवञ्च = पृथक्कारणताकल्पने च । ४ तेषां = अप्रामाण्यग्रहाभावानां । ५ हेतुतामते = मीमांसकमते । ६ तत्र = जन्यतावच्छेदककोटौ ।

व्याप्तिज्ञानानां सहस्रकार्यकारणभावः, परं पक्षधर्मताज्ञानस्याप्येकैकपक्षतावच्छेदकावच्छिन्नविषयतां निवेश्यैकैकमात्रकारणताकल्पनमिति सहस्रपक्षतावच्छेदकभेदेनानुमितिपक्षधर्मताज्ञानानामपि कार्यकारणभावसहस्रमिति द्विसहस्रकार्यकारणभावो यत्रास्माकन्तु विशिष्टपरामर्शहेतुतावादिनां[1] सहस्रगुणितसहस्रकार्यकारणभावकल्पनं तन्मते[2] साध्यतावच्छेदकावच्छिन्नपक्षतावच्छेदकावच्छिन्नयोरेकत्र निवेशेन पर्वतत्वमहानसत्वादिरूपैकपक्षतावच्छेदकं निवेश्य वह्नित्वद्रव्यत्वादिरूपसहस्रसाध्यतावच्छेदकभेदेन कारणतासहस्रस्य कल्पनीयत्वादिति ।

यत्तु, ज्ञानद्वयहेतुतामते[3] व्याप्तिज्ञानस्य पक्षधर्मताज्ञानस्य च जन्यतावच्छेदककोटौ ज्ञानद्वयवैशिष्ट्यानिवेशस्यावश्यकतया व्याप्तिज्ञानपक्षधर्मताज्ञानयोः पक्षतावच्छेदकसाध्यतावच्छेदकगर्भतया पक्षतावच्छेदकभेदेनापि कारणताभेद आवश्यक इति तन्न स्व[4]जन्यतावच्छेदककोटौ स्ववैशिष्ट्यनिवेशेनैवोपपत्तौ ज्ञानद्वयवैशिष्ट्यस्य कुत्राप्यनिवेशात् । न च व्याप्तिज्ञानादिजन्यतावच्छेदककोटौ पक्षधर्मताज्ञानादिवैशिष्ट्यानिवेशे पक्षधर्मताज्ञानादिशून्यकालेऽपि व्याप्तिज्ञानादितोऽनुमित्यापत्तिः, कार्यतावच्छेदकयोर्व्याप्यव्यापकभावविरहेण फलोत्पादने तयोः[5] परस्परापेक्षाया असम्भवादिति वाच्यम्, कार्यतावच्छेदकसामानाधिकरण्यमात्रस्य परस्परसहकारितायास्तत्रोपगमात् व्याप्यव्यापकभावविरहेऽपि न क्षतिः ।

अथ ज्ञानद्वयहेतुतामते[6] धूमो वह्निव्याप्य आलोकवान पर्वत इत्येतादृशज्ञानद्वयदशायां पर्वतो वह्न्यभाववानित्येतादृशबाधाभावबलात् पर्वतो वह्निमानित्येतादृशानुमित्यापत्तिः, तादृश[7]व्याप्तिज्ञानस्येव तादृशपक्षधर्मताज्ञानस्यापि[8] बाधाभावादिसहकारित्वात्स्यादेवं यदि तथाविधव्याप्तिज्ञान एकत्र निवेश्य

---

१ वादिनां = नैयायिकानां । २ तन्मते = मीमांसकमते । ३ हेतुतामते = मीमांसकमते ।
४ स्वं = व्याप्तिज्ञानादि । ५ तयोः = कार्यतावच्छेदकयोः । ६ मते = मीमांसकनये ।
७ तादृशस्य = धूमो वह्निव्याप्य इत्याकारकस्य । ८ ज्ञानं = आलोकवान्पर्वत इत्याकारकज्ञानं ।

बाधाभावादिघटितसामग्र्याः फलव्याप्यत्वं स्वीक्रियते, तदेव न, किन्तु तल्लिङ्गकव्याप्तिज्ञानतल्लिङ्गकपक्षधर्मताज्ञाने एकत्र निवेश्यैव, न हि तादृशसामग्री[1] प्रकृते इति नापत्त्यवकाश इति ।

केचित्तु धूमो वह्निव्याप्यो धूमवान् पर्वत इत्येतादृशज्ञानदशायामिदं वह्निव्याप्यत्वावच्छिन्नाभाववति वह्निव्याप्यत्वावच्छिन्नप्रकारताकमित्याकारकाप्रामाण्यग्रहसत्त्वेऽपि मीमांसकमतेऽनुमितिरुत्पद्यत एव तादृशाप्रामाण्यग्रहेण व्याप्यत्वावच्छिन्नप्रकारतायामेव प्रकारतावच्छेदकावच्छिन्नाभाववद्वृत्तिविशेष्यतानिरूपितत्वावगाहनात्, शुद्धधूमत्वावच्छिन्नप्रकारताशालिज्ञानादनुमित्यनुत्पादे बीजाभावात् । एवञ्च तादृशा[2]प्रामाण्यग्रहाभावमनिवेश्यैव ज्ञानद्वयहेतुतास्वीकर्त्तव्या, तथा च[3] वह्निव्याप्यधूमवान् पर्वत इत्याकारकवह्निव्याप्यत्वाच्छिन्नप्रकारताशालिग्रहादपि तादृशाप्रामाण्यग्रहदशायामप्यनुमित्यापत्तिः । धूमवान् पर्वत इत्यादिज्ञानहेतुतायां शुद्धधूमत्वावच्छिन्नप्रकारताकत्वं निवेश्य तत्रापिवारणे स्वप्रामाण्यग्रहशून्यकालेऽपि विशिष्टपरामर्शादनुमित्यनुदयप्रसङ्गः, तदनुरोधेन तादृशाप्रामाण्यग्रहाभावं निवेश्य विशिष्टपरामर्शस्य हेतुतास्वीकारे च कृतमधिकेन ज्ञानद्वयहेतुत्वेन ।

एवं ज्ञानद्वयहेतुतामते धूमो वह्निव्याप्य इत्येतादृशव्याप्तिज्ञानदशायां वह्निव्याप्यत्वावच्छिन्नाभाववान् धूमवांश्च पर्वत इत्येतादृशपक्षधर्मताज्ञानसत्त्वेऽप्यनुमितिरुत्पद्यते तादृशपक्षधर्मताज्ञान[4]स्यापि धूमत्वावच्छिन्नाभावानवगाहितया निर्णयत्वात् ।

एवञ्च वह्निव्याप्यत्वावच्छिन्नाभावप्रकारताकान्यत्वरूपनिर्णयत्वं, पक्षधर्मताज्ञानहेतुतायां निवेशयितुन्न शक्यत इति, वह्निव्याप्यत्वावच्छिन्नाभाववान् वह्निव्याप्यधूमवान् पर्वत इत्येतादृशसंशयादप्यनुमित्यापत्ति-

---

१ सामग्री = निरुक्ताबधाभावादिघटिता सामग्री । २ तादृशः = वह्निव्याप्यत्वावच्छिन्नाभाववति वह्निव्याप्यत्वावच्छिन्नप्रकारताकः । ३ तथा च = अप्रामाण्यग्रहाभावमनिवेश्य-कारणताकल्पने च । ४ ज्ञानस्य = वह्निव्याप्यत्वावच्छिन्नाभाववान् धूमवांश्च पर्वत इत्याकारकज्ञानस्य ।

रितिन्यायमतमेव साधीयानित्याहुस्तदप्यसत्, वह्निव्याप्यत्वावच्छिन्नाभाववति वह्निव्याप्यत्वावच्छिन्नप्रकारकमित्याकारकाप्रामाण्यग्रहाभावो न हेतुमत्ताज्ञाने विशेषणतया निवेश्यते, येन धूमवान् पर्वत इत्यादिज्ञानात्तादृशाप्रा[1]माण्यग्रहदशायामनुमितिर्नोत्पद्यते, अपि तु स्वीयवह्निव्याप्यत्वावच्छिन्नाभाववद्विशेष्यतानिरूपितनिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतवह्निव्याप्यत्वावच्छिन्नप्रकारतात्वासत्त्वेनोक्तसम्बन्धावच्छिन्नप्रतियोगिताकस्तादृशाप्रामाण्यग्रहाभावो विशेषणतया हेतुप्रकारतायान्निवेश्यते धूमवान् पर्वत इत्येतादृशज्ञानीय हेतुप्रकारतायां वह्निव्याप्यत्वावच्छिन्नप्रकारतात्वासत्त्वेनोक्तसम्बन्धावच्छिन्नप्रतियोगिताकतथाविधाप्रामाण्यग्रहाभावस्तदानीमपि[2] सुलभ एवेति नानुपपत्तिः।

अथैवं पुरुषान्तरीयतादृशाप्रामाण्यग्रहग्रहदशायामपि वह्निव्याप्यधूमवान् पर्वत इत्येतादृशपरामर्शादनुमित्यनुदयापत्तिः, तादृशज्ञानीय[3]हेतुप्रकारतायामुक्तसम्बन्धेन पुरुषान्तरीयाप्रामाण्यग्रहस्यैव सत्त्वादिति चेन्न. तादृशव्याप्यत्वावच्छिन्नप्रकारतात्वस्व[4]समानाधिकरणज्ञाननिरूपितत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव निवेशनीयतया व्यधिकरणज्ञानीयहेतुप्रकारतायां स्वसमानाधिकरणज्ञाननिरूपितत्वघटितोभयसम्बन्धेनाप्रामाण्यग्रहासत्त्वेनानुपपत्त्यभावात्। स्वसमानाधिकरणज्ञाने स्वविशेष्यत्वमपि निवेश्यमतो ज्ञानान्तरविशेष्यकाप्रामाण्यग्रहदशायान्न तद[5]नास्कन्दितद्वितीयपरामर्शादनुमित्यनुपपत्तिः। एवम्, वह्निव्याप्यत्वावच्छिन्नाभाववान् वह्निव्याप्यधूमवान् पर्वत इत्येतादृशसंशयादनुमित्यापत्तिवारणाय स्वनिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकीभूतवह्निव्याप्यत्वावच्छिन्नत्वस्व[6]निरूपकज्ञाननिरूपितत्वोभयसम्बन्धेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपिताभावप्रकारतावदन्यत्वमेव हेतुप्रकारतायां निवेश्यते, न तु वह्निव्याप्यत्वावच्छिन्नाभावप्रकारताकत्वं हेतुमत्ताज्ञानांशे, नातो वह्निव्याप्यत्वावच्छिन्नाभाववान् धूमवांश्च पर्वत इत्येतादृशज्ञानादनुमित्यनुपपत्तिः। अथैवं साध्यता

---

१ तादृशः=वह्निव्याप्यत्वावच्छिन्नाभाववति वह्निव्याप्यत्वावच्छिन्नप्रकारताकः। २ तदानीं=निरुक्तज्ञानकाले। ३ तादृशः=परामर्शात्मकः। ४ स्वम्=अप्रामाण्यज्ञानं। ५ तत्=अप्रामाण्यज्ञानं। ६ स्वं=प्रकारता।

वच्छेदकविशेषघटितनिश्चयत्वादेः पक्षधर्मताज्ञानहेतुतायां निवेशे तस्य[1]साध्यतावच्छेदकभेदेन हेतुत्वमावश्यकमिति न पूर्वोक्तलाघवावकाश इति चेत् एवमपि व्याप्तिज्ञानस्य पक्षतावच्छेदकभेदेन हेतुताभेदाभावाल्लाघवमक्षुण्णमेवेति, तथा हि विशिष्टपरामर्शहेतुतामते[2] पक्षतावच्छेदकभेदेनानन्तहेतुमत्ताज्ञानकारणतायां व्याप्तिविषयतानिवेशादानन्तस्थले कारणताधिक्यम् ।

अस्माकन्तु[3] व्याप्तिज्ञानस्य स्वातन्त्र्येणैव हेतुताकल्पनम्, तत्र[4] विनिगमनाविरहेण कतिपयकारणताधिक्यमिति स्फुटतरमेवलाघवम् । यत्तु ज्ञानद्वयहेतुतामते सिद्धावनुमित्साविशिष्टपरामर्शस्योत्तेजकत्वकल्पने व्याप्तिज्ञानपक्षधर्मताज्ञानयोरेकविशिष्टापरत्वमेवोत्तेजकं वाच्यम्; विनिगमनाविरहेण तत्रविशेष्यविशेषणभावेन प्रतिबध्यप्रतिबन्धकभाववृद्धिरिति; तदसत्, ज्ञानद्वयहेतुवादिभिः प्रभाकरैः सिद्धेः प्रतिबन्धकताया एवानङ्गीकारात् ।

अत्र वदन्ति, ज्ञानद्वयहेतुतामते हेतुतावच्छेदकभेदेन कारणताबाहुल्यम्, तथा हि धूमो वह्निव्याप्य आलोकवान् पर्वत इत्येतादृशज्ञानद्वयादनुमित्यापत्तिवारणाय तन्मते[5] विशिष्य हेतुतावच्छेदकविषयतानिवेशस्यावश्यकत्वादिति । नैयायिकमते च हेतुतावच्छेदकमनिवेश्य साध्यव्याप्यत्वावच्छिन्नप्रकारताकत्वेनैव धूमालोकादिलिङ्गकपरामर्शानां हेतुता कल्प्यत इति न तद्भेदेन[6] कारणताबाहुल्यम् ।

अथ धूमो वह्निव्याप्यो धूमवान् पर्वत इत्यादिनिर्णयानां यद्यनुमितौ स्वतन्त्रेण हेतुता तदैवेदं वक्तुं शक्यते तदेव[7] न, अन्यत्र क्लृप्तकारणतयैव निर्वाहात्, तथा हि धूमो वह्निव्याप्य इत्येतादृशनिर्णयस्यापाद्यव्यतिरेकनिर्णयमुद्रया धूमो वह्निव्याप्यो न स्यादित्येतादृशतर्कैर्विशेषणतावच्छेदकप्रकारकनिश्च-

१ तस्य = निश्चयत्वस्य । २ हेतुतामते = न्यायमते । ३ अस्माकम् = मीमांसकानां नये तु । ४ तत्र = कारणत्वे । ५ तन्मते = ज्ञानद्वयहेतुतावादिप्रभाकरमते । ६ तद्भेदेन = हेतुतावच्छेदकभेदेन । ७ तदेव = स्वातन्त्र्यणहेतुत्वमेव ।

यादिमुद्रया वह्निव्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिबोधादौ च हेतुता सर्ववादिसिद्धा तत्रैवापत्तित्वादिकमनिवेश्याऽव्यवहितोत्तरत्वसम्बन्धेन तादृशनिर्णयविशिष्टत्वमात्रस्यैव जन्यतावच्छेदकत्वमभ्युपेयते, अनुमितेरपि तादृश[1]जन्यतावच्छेदकाक्रान्ततया तत्स्थलीयहेतुतयैवोपपत्तिः।

एवम् धूमवान् पर्वत इत्येतादृशनिर्णयस्यापि पर्वतो निर्धूमः स्यादित्येतादृशापत्तौ धूमविशिष्टपर्वतवैशिष्ट्यावगाहिबोधे च क्लृप्तकारणतयैव निर्वाहः। इयांस्तु विशेषः, धूमो वह्निव्याप्यो धूमवान् पर्वत इत्यादिनिर्णयात् प्रत्येकश एवापत्त्यादिकार्यमुत्पादयन्ति, अनुमितिं पुरःसम्भूयैव सामग्रीव्याप्तिवैचित्र्यादिति चेदेवं सति विशिष्टपरामर्शस्यापि क्लृप्तकारणतयैवोपदर्शितदिशा निर्वाहयितुं शक्यतया लाघवगौरवाभावात्, ज्ञानद्वयहेतुतास्वीकारो निर्युक्तिकः।

वस्तुतस्तु परामर्शस्य क्लृप्तकारणतया निर्वाहेऽप्यनुमितिसामग्रीप्रतिबन्धकतायाः लिङ्गभेदेन बाहुल्यं मीमांसकमते दुर्वारमेव। धूमो वह्निव्याप्य आलोकवान् पर्वत इत्येतादृशज्ञानद्वयकाले भिन्नविषयकप्रत्यक्षाद्युपपत्तये धूमत्वावच्छिन्नविशेष्यकव्याप्तिज्ञानत्वधूमत्वावच्छिन्नप्रकारकपक्षधर्मताज्ञानत्वाभ्यामेव व्याप्तिज्ञानहेतुमत्ताज्ञानयोः सामग्रीप्रतिबन्धकतायां निवेशनीयत्वात्।

नैयायिकमते च धूमालोकादिपरामर्शानामुक्तानुगतरूपेणैव निवेशसम्भवात् न लिङ्गभेदेन सामग्रीप्रतिबन्धकताभेद इति।

अथ स्वीयव्याप्तिप्रकारतानिरूपितविशेष्यतावच्छेदकीभूतधर्मावच्छिन्नप्रकारताकत्वसामानाधिकरण्योभयसम्बन्धेन व्याप्तिज्ञानविशिष्टपक्षधर्मताज्ञानत्वेन धूमवान् पर्वत इत्यादिज्ञानानां सामग्रीप्रतिबन्धकतायान्निवेशनीयतया धूमो वह्निव्याप्य आलोकवान् पर्वत इत्यादिज्ञानकाले प्रत्यक्षाद्युत्पत्तिरिति। मीमांसकमतेऽपि न लिङ्गभेदेनानुमितिसामग्रीप्रतिबन्धकतायाः भेद इति चेदेवमपि[2] दर्शितदिशा हेतुमत्ताज्ञानानां [3]स्वीयपक्षविशेष्यतानिरूपितप्रका-

---

१ तादृशः = अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नः। २ एवमपि = प्रतिबन्धकताभेदाभावेऽपि।
३ स्वं = पक्षधर्मताज्ञानं।

रतावच्छेदकधर्मावच्छिन्नविशेष्यता निरूपितव्याप्तिप्रकारताकत्वसामानाधिकरण्योभयसम्बन्धेन पक्षधर्मताज्ञानविशिष्टव्याप्तिज्ञानत्वेन व्याप्तिज्ञानानां वा सामग्रीप्रतिबन्धकतायां निवेशे विनिगमनाविरहप्रयुक्तसामग्रीप्रतिबन्धकताबाहुल्यं दुर्वारमेव ।

एवम् वह्निव्याप्याभाववान् पर्वत इत्याकारकप्रत्यक्षादौ पर्वतादिविशेष्यकवह्न्याद्यनुमितिसामग्र्याः प्रतिबन्धकताकल्पनाधिक्यं मीमांसकमते, अन्यथा[1] धूमो वह्निव्याप्यो धूमवान् पर्वत इत्येतादृशज्ञानद्वयघटितानुमितिसासामग्रीदशायां तथाविध[2]प्रत्यक्षापत्तिः ।

नैयायिकमते तु अनुमितिसामग्रीदशायां विशिष्टपरामर्शस्यावश्यकतया तस्य[3] च तादृशप्रत्यक्षादौ बाधमुद्रया प्रतिबन्धकता, तत एव तदानीं[4]न्तथा[5]विधप्रत्यक्षाद्यनुत्पादसम्भवात् सामग्रीप्रतिबन्धकताकल्पनं विनैवोपपत्तेः ।

न च घटादिप्रत्यक्षे वह्न्याद्यनुमितिसामग्र्याः प्रतिबन्धत्वस्योभयवादिसिद्धतया तत्रैव सर्वसाधारणभिन्नविषयकज्ञानत्वमेव प्रतिबध्यतावच्छेदकत्वमुपेयत इति नोपदर्शितप्रत्यक्षाद्यनुमितिसामग्र्याः प्रतिबन्धकत्वान्तरकल्पनमस्माकमपीति वाच्यम् । घटप्रत्यक्षं जायतामित्याकारिकेच्छानामुत्तेजकत्वानुरोधेन विषयविशेषनिवेशस्यावश्यकतया प्रतिबन्धकताभेदस्यावश्यकत्वात् ।

अथ प्रत्यक्षानुमित्यादीनां युगपदुत्पादोपगमेन भेदे व्यक्तिकल्पनाबाहुल्यम्, अभेदे तु प्रत्यक्षत्वानुमिति[त्व]वादिनां साङ्कर्यमित्येव सामग्रीप्रतिबन्धकतायां बीजम्, गुणगतजातिमनङ्गीकुर्वताम्मीमांसकानां प्रत्यक्षत्वानुमितित्वादीनां जातित्वाभावात्, साङ्कर्यस्यादोषतयाऽनुमित्याद्युत्पत्तिकाले त[6]दभिन्नप्रत्यक्षोत्पादोपगमे क्षतिविरहादिति सामग्रीप्रतिबन्धकताकल्पनं नास्त्यतो नोपदर्शित

---

१ अन्यथा = सामाग्रीप्रतिबन्धकत्वाकल्पने । २ तथाविधस्य = स्यवह्निव्याप्याभाववान् पर्वतनित्याकारकस्य । ३ तस्य = तादृशपरामर्शस्य । ४ तदानीं = अनुमितिसामग्रींदशायां । ५ तथाविधः = वह्निव्याप्याभाववान्पर्वत इत्याकारकः । ६ तत् = अनुमितिः ।

प्रत्यक्षादावनुमितिसामग्रीप्रतिबन्धकताकल्पनगौरवावकाश इति चेन्न, वह्न्यनुमितावुदासीन[1]पदार्थविषयतायाऽनुभवविरुद्धतया सामग्रीप्रतिबन्धकताकल्पनायाः सर्वमत एवावश्यकत्वादिति न्यायमतमेव सम्यक्। इदमत्रावधेयम्, अस्तूपदर्शित[2]गौरवं मीमांसकमते तथापि[3] भिन्नविषयकप्रत्यक्षादिकं प्रति धूमवत्पर्वतत्वावच्छिन्नपक्षकवह्निव्याप्यधूमसमानाधिकरणालोकत्वावच्छिन्नविधेयताकानुमितिसामग्रीणामनन्तानां प्रतिबन्धकत्वाकल्पने नातीव लाघवम्, तादृशा[4]नुमितिसामग्रीकाले धूमत्वावच्छिन्नविशेष्यकव्याप्तिज्ञानधूमत्वावच्छिन्नप्रकारकपक्षधर्मताज्ञानादिघटितधूमलिङ्गकपर्वतपक्षकवह्निविधेयताकानुमितिसामग्र्या आवश्यकत्वात् तत्प्रतिबन्धकतयैवोपपत्तेः।

नैयायिकमते तु तादृश[5]सामग्रीकाले पर्वतादिपक्षकवह्न्याद्यनुमितिजनकविशिष्टपरामर्शस्यासत्त्वादनापत्त्या तादृशानुमितिसामग्रीणां प्रतिबन्धकत्वान्तरकल्पनमावश्यकमिति।

अथ पर्वतादिपक्षकवह्न्याद्यनुमितिसामग्रीप्रतिबन्धकतायां पर्वतो वह्निमानित्याकारकसिद्ध्यभावस्यावश्यं निवेशनीयतया तथाविध[6]सिद्धिकाले उपदर्शितानुमितिसामग्रीसत्त्वे भिन्नविषयकप्रत्यक्षापत्तिरिति तथाविधसामग्रीणां प्रतिबन्धकत्वान्तरकल्पनमावश्यकम् प्रभाकराणामपीति चेत् स्यादेवं यदि प्रभाकरः सिद्धेः प्रतिबन्धकत्वं स्वीकुर्यात्तदेव न।

अथैवमपि पर्वतो वह्न्यभाववानित्याकारकपक्षविशेष्यकवह्न्यनुमितिप्रतिबन्धकबाधादिकाले तादृशानु[7]मितिसामग्रीसत्त्वे भिन्नविषयकप्रत्यक्षापत्त्या तथाविधानुमितिसामग्रीणां प्रतिबन्धकत्वान्तरकल्पनं प्रभाकराणामप्यावश्यकमिति चेदेवमपि तथाविधबाधादिप्रतिबन्धकीभूतधूमवत्पर्वतत्वावच्छिन्नपक्षकवह्निमत्पर्वतवृत्तिवह्निव्याप्यधूमसमानाधिकरणालोकत्वावच्छिन्नवि-

१ उदासीनः = घटापटादिः। २ उपदर्शितं = प्रतिबन्धकताकल्पनप्रयुक्तं। ३ तथापि = उक्तगौरवसत्त्वेऽपि। ४ तादृशी = निरुक्तालोकत्वावच्छिन्नविधेयताका। ५ तादृशसामग्री = निरुक्तानुमितिसामग्री। ६ तथाविधा = पर्वतो वह्निमानित्याकारिका। ७ तादृशानुमितेः = पर्वतपक्षकवह्न्यनुमितेः।

धेयताकानुमितिसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवं दुष्परिहारमेव, तथा विधानुमितिसामग्रीकाले पर्वतो वह्न्यभाववानित्याकारकबाधाद्यभावघटितायाः पर्वतपक्षकवह्न्याद्यनुमितिसामग्र्या आवश्यकत्वात् ।

अथ पर्वतपक्षकपर्वतो वह्निमानित्याकारकलौकिकप्रत्यक्षशाब्दबोधादीनान्तथाविधानुमितिसामग्र्याः प्रतिबध्यतयोपदर्शितविशिष्टधर्मावच्छिन्न-साध्यकानुमितिसामग्रीणान्तद्विरोधित्वकल्पनं मीमांसकमतेऽप्यावश्यकम् ।

एवञ्च तत्रैव विषयमनिवेश्य भिन्नविषयकानुमित्यन्यज्ञानत्वस्यैव प्रतिबध्यतावच्छेदकत्वमुपेयत इति तत[1] एवान्यविषयकप्रत्यक्षादिवारणं सम्भवत्यतो नैतादृशसामग्र्याः प्रतिबन्धकत्वाधिक्यं वह्निप्रत्यक्षं जायतामित्याकारिकेच्छानां विशिष्योत्तेजकत्वानुरोधेन विषयभेदेन प्रतिबध्य प्रतिबन्धकभावभेद आवश्यक इति तु नाशङ्कनीयम्, स्व[2]विषयत्वस्ववृत्तिकृतिमत्त्वोभयसम्बन्धेन सामान्यत इच्छाविशिष्टान्यत्वस्य प्रतिबध्यतावच्छेदककुक्षिनिवेशेनैवेच्छाधीनज्ञानव्यभिचारस्य शक्यवारणतया इच्छाया उत्तेजकतैव नास्ति । यद्यप्येवं नैयायिकमतेऽपि वह्निव्याप्याभाववानित्येतादृशप्रत्यक्षादौ पर्वतादिपक्षकवह्न्याद्यनुमितिसामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तमुपदर्शितलाघवं न सम्भवति, घटप्रत्यक्षस्थलीयप्रतिबन्धकतयैवोपपत्तौ मीमांसकमते स्वतन्त्रप्रतिबन्धकत्वविरहात्, तथापि प्रथमोपदर्शितलाघवस्य निराबाधत्वमेवेति ।

यत्तु उपदर्शितोभय[3]सम्बन्धेनेच्छाविशिष्टान्यत्वस्य प्रतिबध्यतावच्छेदकत्वे इच्छाकालेऽपि विरोधिसामग्र्यभाववशात् तदवच्छिन्नापत्तिस्तत्र सामान्यत इच्छात्वादिना प्रतिबन्धकत्वकल्पनं न सम्भवति, घटप्रत्यक्षं जायतामित्येतादृशेच्छाकाले घटप्रत्यक्षसामग्र्यामसत्यां तादृशोभयसम्बन्धेनेच्छाविशिष्टान्यस्य पटप्रत्यक्षादेरनुत्पादप्रसङ्गात्, तस्मादिच्छाया उत्तेजकत्वमावश्यकमिति तदसत्, उपदर्शितोभयसम्बन्धेनेच्छाविशिष्टान्यघटचाक्षुषत्वावच्छिन्नं प्रति घटचाक्षुषं जायतामितीच्छानां विशिष्य प्रतिबन्धकताकल्प-

१ तत एव = तादृशप्रतिबन्धकत्वकल्पनादेव । २ स्वम् = इच्छा । ३ उभयसम्बन्धेन = स्वविषयकत्वस्ववृत्तिकृतिमत्त्वोभयसम्बन्धेन ।

नेनैवोपदर्शितापत्तिवारणसम्भावात्सामग्रीप्रतिबन्धकतायां विशिष्येच्छाया उत्तेजकत्वापेक्षया तादृशप्रतिबध्यप्रतिबन्धकभावस्यकल्पयितुमुचितत्वादिति चेत्, अस्त्येतादृशरीत्योपदर्शितानुमितिसामग्रीप्रतिबन्धकताधिक्यपरिहारस्तथापि तादृशसामग्र्याः प्रतिबध्यतावच्छेदकगौरवं दुर्वारमेव, तथा हि मन्मते[1] तादृशसामग्र्याः पर्वतविशेष्यकानुमित्यन्यवह्निज्ञानत्वादिकमेव जन्यतावच्छेदकं, घटप्रत्यक्षत्वादेस्तु प्रतिबध्यतानवच्छेदकत्वेऽपि क्षतिविरहात् ।

भवन्मते[2] तु घटप्रत्यक्षादिसाधारणं वह्निमत्पर्वतवृत्तिवह्निव्याप्यधूमसमानाधिकरणालोकव्याप्यधूमत्वावच्छिन्नप्रकारतानिरूपितधूमवत्पर्वतत्वावच्छिन्नविशेष्यताभिन्नमुख्यविशेष्यताशाल्यनुमित्यन्यज्ञानत्वादेरेव तथात्व[3]मुपेयम्, केवलस्यानुमित्यन्यज्ञानत्वस्य तथात्वे[4] समानविषयकशाब्दबोधादौ व्यभिचारप्रसङ्गादिति । एवञ्चात्राल्पतरं वह्न्याद्यनुमितिसामग्रीप्रतिबन्धकतायामेकज्ञानविशिष्टापरज्ञाननिवेशप्रयुक्तगौरवं मीमांसकमते, नैयायिकमते तु तत्स्थलीयतादृशा[5]नुमितिसामग्रीनियतोपदर्शितसामाग्रीणामनन्तानाम्प्रतिबध्यतावच्छेदकगौरवमिति मीमांसकमतमेव समीचीनतया प्रतिभाति इति ।

समाप्तश्चायं ज्ञानद्वयकारणताविचारः ।

---

१ मन्मते = मीमांसकमते । २ भवन्मते = नैयायिकमते । ३ तथात्वं = जन्यतावच्छेदकत्वं । ४ तथात्वे = जन्यतावच्छेदकत्वे । ५ तादृशी = पर्वतो वह्निमानित्याकारिका ।

## प्रतियोगिज्ञानकारणताविचार ।

तत्किमोर्मन्महाभिन्नमभिन्नो [?] युष्मदस्मदोः ।
अन्येषां यदुदासीनं तद्धाम परमं नुमः ॥

प्रतियोगि[1]ज्ञानमभाव[2]प्रत्यक्षे कारणमिति प्राञ्चः । तत्र[3] घटाभावप्रत्यक्षे घटज्ञानं कारणमिति विशिष्यैव कार्यकारणभावो वाच्यः ।

नन्वत्र[4] किम्मानमिति चेत्, घटज्ञानाभावे तद्[5]भावाप्रत्यक्षमेव, इह घटो नास्तीत्येवाभावप्रत्यक्षं, तच्चा[6]नुयोगिप्रतियोगिज्ञान[7]मपेक्षते, एतदेवोच्यते "सद्भ्यामभावो निरूप्यत इति" सद्भ्यां = ज्ञाताभ्यामनुयोगिप्रतियोगिभ्यामिति तदर्थः । अत[8] एव प्रतियोगिता न व्यधिकरणधर्मावच्छिन्नेति मतं साधु । यो[9] यद्[10]भावप्रतियोगितावच्छेदकः तत्[11]प्रकारकं प्रतियोगिज्ञानं[12] तत्प्रत्यक्षे हेतुः, अत्र च घटत्वप्रकारकं पटज्ञानं न सम्भवति, सम्भवति च भ्रमस्वरूपं ततश्च[13] वस्त्वसिद्धेः ।

न च प्रतियोगिज्ञानमेव कारणं, न तु तत्प्रतियोगितावच्छेदकप्रकारकं तदिति वाच्यम् । घटनिर्विकल्पानन्तरं तद्[14]भावाप्रत्ययात्, प्रतियोगिनि च विशेषणीभूतमेवावच्छिन्नत्वसम्बन्धेन भासते प्रतियोगितायाम्, अन्यथा[15] घटत्व-

---

१ = प्रतियोगी = घटादिः । २ अभावः = घटाद्यभावः । ३ तत्र = कार्यकारणभावे । ४ अत्र = एतादृशकार्यकारणभावे । ५ तत् = घटः । ६ तच्च = प्रत्यक्षं । ७ अनुयोगिप्रतियोगिज्ञानम् = भूतलघटादिज्ञानम् । ८ अत एव = अनुयोगिप्रतियोगिज्ञानस्याभावप्रत्यक्षेकारणत्वादेव । ९ यः = घटत्वादिः । १० यत् = घटादि । ११ तत् = घटत्वादि । १२ ततः = भ्रमात् । १३ = तत् = प्रतियोगिज्ञानम् । १४ तदभावः = घटाभावः । १५ अन्यथा = एतदस्वीकारे ।

त्यपि घटो नास्तीति प्रतित्यापत्तेः, घटत्वेनोपस्थितो घटः पटत्वाद्यवच्छिन्नत्ववि- शिष्टप्रतियोगितायामभावश्च भूतलादौ भासते, सा[1] प्रतियोगिता न घटस्य सम्बन्ध इति चेत न, पटत्वावच्छिन्नप्रतियोगितयाऽभावोपरि द्रव्यमवगाह्य द्रव्य- वति द्रव्यं नास्तीत्यापत्तेः दुस्समाधेयत्वात् ।

अथ पटत्वेन घटो नास्तीत्यत्रास्तु घटांशे पटत्वस्यासत्त्वात् तत्र[2] तज्ज्ञानम- प्रमेति घटे पटत्वासिद्धिः न तु प्रतियोगितायां तदवच्छिन्नत्वं तत्रापि, तत्र बाध- काभावात् । व्यधिकरणधर्मावच्छिन्नाभावप्रतीतेश्च गवि शशशृङ्गं नास्ति, इह द्वी- पे पीतः शङ्खो नास्तीत्याकारिकायाः सत्त्वात्, शशीयत्वेन शृङ्गनिष्ठायाः पीतत्वेन शङ्खनिष्ठायाः प्रतियोगितायाः अवच्छिन्नत्वस्य भानात । न च[3] तत्र शृङ्गत्वशङ्ख- त्वाभ्यामेवावच्छिन्ना प्रतियोगिता भासत इति वाच्यम् ।

शृङ्गवत्तया शङ्खवत्तया चावगते देशे तथाविधाभाव[4]प्रत्ययानापत्तेः ।

अत[5] एव न केवलं शशीयत्वपीतत्वेऽवच्छेदके, शशीयनख दिमत्तया पीतघटादि- मत्तया ज्ञाते तदभावाप्रत्ययप्रसङ्गात् । तथा च पीतघटोनास्तीतिवत् व्यधिकरण- धर्मावच्छिन्नाभावज्ञानं न समानाधिकरणधर्मावच्छिन्नाभावज्ञानमर्यादामति- क्रामति । अतश्च साधयत्येव व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितामिति चेत्, न, अवच्छिन्नत्वांशेऽपि शशीयत्वाद्यवगाहनस्य भ्रमत्वात् , एतद्भ्रमत्वे किम्मा- नमिति चेत् , वैयधिकरण्यमेव, वैयधिकरण्यञ्चावच्छेदकताघटकत्वेनाभिमत- सम्बन्धेन प्रतियोगित्वासामनैयत्यम, अतो न घटत्वेन घटपटयोस्तद्घटस्य चा- भावः, गौरववदेतादृशवैयधिकरण्यस्यापि बाधकत्वात्, व्यधिकरणधर्मावच्छिन्न- त्वज्ञानं प्रतियोगितायां प्रमेयत्वस्य शपथैकश्रद्धेयत्वात्, तथा हि पीतः शङ्खो नास्ती- तिप्रतीत्या पीतत्वस्यावच्छेदकत्वमवच्छेदकत्वाख्यविषयतया गृह्यते, इयञ्च विष- यता न प्रकारतेति न प्रमात्वघटिका, तद्वति तत्[6]प्रकारकं हि ज्ञानं तत्साधकमिति ।

---

१ सा प्रतियोगिता = पटत्वाद्यवच्छिन्नत्वविशिष्टप्रतियोगिता । २ तत्र तज्ज्ञानं = घटे पटत्व- ज्ञानं । ३ तत्र = गवि शशशृङ्गं नास्ति, इह द्वीपेपीतः शङ्खो नास्तीत्यत्र । ४ तथाविधाभावः = शशशृङ्गं नास्ति, पीतःशङ्खो नास्तीत्याकारकाभावः । ५ अत एव = प्रत्ययानापत्तिभया- देव । ६ तत् = प्रमात्वं ।

न चैवम्, घटो नास्तीत्यादावपि घटत्वादेरवच्छेदकत्वमवच्छेदकत्वाख्यविषयतयैव भासते न तु प्रकारतयेति समानाधिकरणधर्मेऽप्यवच्छेदकत्वं न सिध्येदिति वाच्यम्, घटो नास्तीत्यादिज्ञानीया प्रतियोगित्वनिष्ठसंसगताानिरूपिताऽवच्छिन्नत्वनिष्ठावच्छेदकत्वाख्यविषयता निरूपिताऽवच्छेदकत्वाख्यविषयता साश्रयिका विषयतात्वादित्यनुमानेनावच्छेदकतारूपपदार्थसिद्धौ, इयमवच्छेदकता क्वचिदाश्रिता नित्यद्रव्यभिन्नत्वादित्यनुमानेनास्या[1] आश्रयमात्रं देयम्, तत्र[2] चोभयवादिसिद्धैर्लघुभिराश्रयैरियं कृतकृत्या, न व्यधिकरणं गुरुं वासमाश्रयति गौरवात्। अत्र संसर्गाभावप्रत्यये प्रतियोग्यारोपो हेतुरिति सम्प्रदायः, कदाचित् समवायावच्छिन्नस्य कदाचित् संयोगावच्छिन्नस्याभावस्य प्रत्यक्षनियामकत्वात्। येन सम्बन्धेन यदा प्रतियोग्यारोपस्तदा तत्सम्बन्धावच्छिन्नाभावप्रत्यय इति, अन्यथा[3]ऽनियमः स्यात्।

अथ प्रतियोगिमानयमित्यारोपे सति कथमभावप्रत्ययस्तस्या[4]भावज्ञानप्रतिबन्धकत्वात् इति चेत् अत्राहार्यस्तदारोप[5] इत्येके। बाधकालीनेच्छाजन्यज्ञानमाहार्यं, प्रतिबन्धाख्यबाधस्य पूर्वमसत्त्वात् नात्राहार्यम्, इच्छाजन्यज्ञानाभ्युपगमने च "तद्धेतो" रिति न्यायेन इच्छाया एवाभावप्रत्ययनियामकत्वप्रसक्तावारोपहेतुत्वासिद्धेश्चेति नैतत्। किन्तु निर्द्धर्मितावच्छेदककं प्रथममारोपरूपं ज्ञानमित्यपरे। संसर्गमात्रस्यैवारोप इत्यन्ये।

वस्तुतस्तु प्रतियोग्यारोपोऽलौकिकविषयताकः, अभावप्रत्यक्षञ्च लौकिकविषयताकमित्यलौकिकज्ञानस्य[6] लौकिकज्ञाने[7]ऽप्रतिबन्धकत्वादनुपपत्त्यभाव एवेति।

न चारोपनियामकमेव गवेषणीयम्, आरोपेऽननुगतस्यैव नियामकस्यारोपे सति निमित्तानुशरणम, न तु निमित्तमस्तीत्यारोप इत्यतः स्वीकारात्,

---

१ अस्याः = अवच्छेदकत्त्वाख्यविषयतायाः। २ तत्र = आश्रये। ३ अन्यथा = एतादृशनियमास्वीकारे। ४ तस्य = प्रतियोगिमानयमित्यारोपस्य। ५ तदारोपः = प्रतियोग्यारोपः। ६ अलौकिकज्ञानस्य = प्रतियोग्यारोपस्य। ७ लौकिकज्ञाने = अभावप्रत्यक्षे।

अभावप्रत्यक्षे चानुगतमपि कारणं सम्भवतीत्यारोपः कारणमिति। आधुनिकास्तु अभावप्रत्यक्षपूर्वमारोपस्यानुभविकत्वं खण्डयन्तः अननुगतमेव तद्धेतोरिति न्यायेनाभावप्रत्यक्षनियामकमुररीकुर्वन्ति । कारणीभूतज्ञाने प्रतियोगितावच्छेदकस्य यादृशी विषयता फलीभूतज्ञाने तादृश्येव[1] प्रतियोगिनि अवच्छेदकतायाञ्च सेति[2] सर्वसिद्धम्, तत्र प्रतियोग्यंशे तादृशी विषयता विशेषणज्ञाननियम्या, अवच्छेदकतायाञ्च प्रतियोगिज्ञाननियम्येति यादृशतादृशत्वं तदनवच्छेदकानवच्छिन्नत्वमिति, निरवच्छिन्नमेवैकरूपावच्छिन्नमेव वा फले कारणे चेति प्राप्तम् । एतेन, घट इत्यनन्तरं घटत्वस्य निरवच्छिन्नावच्छेदकता, जातिमानित्यनन्तरञ्च जातित्वावच्छिन्नैव न निरवच्छिन्ना, न वा घटेतरासमवेतत्वाद्यवच्छिन्ना, तद्दण्डवानिति ज्ञाने सति तत्त्वविशिष्टदण्डत्वावच्छिन्ना, दण्डवानित्यनन्तरञ्च शुद्धत्वावच्छिन्नेति। ननु विशेषणज्ञानं[3] न कारणं मानाभावात् विशेषण[4]विशेष्या[5]दिसन्निकर्षादेव विशिष्टज्ञानोदयात्[6] तद्विलम्बेनाविलम्बाच्च ।

न च वह्न्यनुमितिसामग्रीकाले विनश्यदवस्थज्ञानजन्यघटज्ञानं जायतामितीच्छासत्त्वे सति च घटसन्निकर्षे घटप्रत्यक्षोपपादनायैतादृश्य[7]ननुगता नानेच्छा भवतामुत्तेजिकाऽनुमितिसामग्र्याम्, अस्माकन्तु विशेषणज्ञानाभावात्तत्र तत्[8]प्रत्यक्षं न जायत एवेति नोत्तेजिका सेति[9] लाघवात् विशेषणज्ञानं कारणमिति वाच्यम्, अत्रैतादृशे[10]च्छाया मयाप्युत्तेजकता नाङ्गीक्रियते, औचित्यस्याकिञ्चित्करत्वात् । किञ्चाननुगतेच्छास्थलं तदेव यत्र फलं निर्व्यूढमिह च फले विवादादेतादृशलाघ[11]वासम्भवात्, प्रत्यक्षसामग्रीप्रतिबन्धकत्वे विशेषणज्ञाननिवेशे गौरवाच्च। अथ विशेषणज्ञानाहेतुत्वे घटत्वपृथिवीत्वद्रव्यत्वानि घटे नियमतः प्रत्यक्षेण जायतामिति चेत्, किञ्चमोऽत्र भवन्मतसमानायामापत्तौ, भवतामपि तेषां निर्विकल्पकाभावे प्र-

---

१ तादृशी = विषयता । २ सा = विषयता । ३ विशेषणं = घटत्वादि । ४ विशेषणं = घटत्वादि । ५ विशेष्यं = घटादि । ६ विशिष्टः = घटत्वादिविशिष्टघटादिविशेष्यकायं घट-इत्याकारकः । ७ तादृशी = विनश्यदवस्थज्ञानजन्या । ८ तत् = घटः । ९ सा = इच्छा । १० एतादृशः = विनश्यदवस्थज्ञानजन्यघटज्ञानं जायतामित्याकारकः । ११ लाघवं = विशेषणज्ञानस्यकारणताप्रयुक्तलाघवं ।

काराभावेनेष्टापत्तेरननुगतप्रतिबन्धकत्वस्यैव वा शरणत्वादिति चेन् मैवम्, कदाचित् जातिमान् कदाचित् घट इति प्रत्ययस्योपपादनाय स्वरूपतस्तद्विषयक[1]ज्ञानं स्वरूपतस्तत्[2]प्रकारकज्ञाने कारणमित्यवश्यमङ्गीकर्त्तव्यम्, न च जातित्वभासकसत्त्वे घटत्वे जातित्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नाप्रकारता, तदसत्त्वे[3] च केवलप्रकारतैवेति वाच्यम्, जातिमान् घट इत्येकज्ञाने स्वरूपतो घटत्वस्य प्रकारत्वानुपपत्तेः। अत्र च निरवच्छिन्नविषयतया ज्ञानं कारणं निरवच्छिन्नप्रकारतया ज्ञानं प्रतीतिरीत्या विषयनिष्ठप्रत्यासत्त्या हेतुहेतुमद्भावो लघीयान्, घटत्वविषयकज्ञानमित्यत्र घटत्वादेस्तत्[4]परिचायकतया च घटत्वत्वादेर्निवेशे गौरवात्। न चात्र कल्पे चैत्रज्ञानानन्तरं मैत्रस्य विशिष्टबुद्धिवारणाय चैत्रीयत्वमैत्रीयत्वानिवेशे गौरवमिति वाच्यम्, लाघवापेक्षया आत्मनोऽनन्तत्वात् एकस्यैवात्मनो नानाशरीरेषु, चैत्रत्वादयोऽनन्ता जातय इति, एवमभावत्वादिकं ज्ञानमेव भासतामिति।

अथास्तु विशेषणज्ञानं हेतु निर्विकल्पकन्तु नायात्, अनादौ संसारे कदाचिदनुभूतस्य घटत्वादेः स्मरणसम्भवादिति चेन्न, विशिष्टप्रत्ययपूर्वं स्मरणकल्पनेऽननुगतोद्बोधकानां कारणत्वे गौरवात्, अपूर्वचैत्रत्वादिजातावनुभवाभावेन स्मरणायोगाच्च।

अथ निर्विकल्पके घटत्वं भासतां स्वरूपतस्तद्विषयकज्ञानस्यापेक्षितत्वात्, अग्रे स्वरूपतो घटत्वे प्रकारतादर्शनात्, घटस्तु किमर्थं, न च सन्निकर्षसत्त्वात् कारण[5]सामर्थ्यादेव घटोऽपि भासत इति वाच्यम्, निरवच्छिन्नविषयतासम्बन्धेन ज्ञानं प्रति जातित्वेन तादात्म्यसम्बन्धेन हेतुत्वात् सामग्र्यभावात्तत्र जातित्वञ्च स्वप्रतियोगिसमवेतत्वस्वानुयोगिसमवेतत्वकालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वैतत्त्रितयसम्बन्धेन भेदवत्त्वम्, निरवच्छिन्नत्वञ्च विषयतायां, प्रकारत्वानिरूपितत्वं, अतो[2] घट इति ज्ञाने घटस्य निरवच्छिन्नविशेष्यत्वं नानुपपन्नम्, एतद्विशेष्यत्वस्य स्वरूपसम्बन्धरूपावच्छिन्नत्वाभावेऽपि प्रकारत्वानिरूपि-

---

१ तद्विषयकः = घटादिविषयकः। २ तत् = घटः। ३ तदसत्वे = जातित्वभासकासत्वे। ४ तत् = घटत्वं। ५ कारणं: = सन्निकर्षादि। ५ स्वं = भेदः। २ अतः = निरवच्छिन्नत्वस्यनिरुक्तार्थकरणे।

तत्वभावात्। निर्विकल्पकीया च विषयताऽनिरूपितैवेति प्रकारत्वानिरूपितापीत्यत एव घटविषयत्वनिरासो निर्विकल्पक इति।

ननु परम्परासम्बन्धस्थलेऽर्थात् स्वसंयोगिद्रव्यसमवेतसमवायादिसंसर्गकघटवत्तादिबुद्धौ तत्[1]घटकेषु पदार्थेषु निरूप्यनिरूपकभावापन्ना नानैव संसर्गता, तत्र प्रकारवृत्तिसंसर्गनिष्ठप्रकारतानिरूपिता विशेष्यवृत्तिसंसर्गनिष्ठा च विशेष्यतानिरूपिता संसर्गतानिरूपिता च परस्परं सर्वैवेति प्रकारावृत्तिपरम्पराघटकद्रव्यदावपि प्रकारत्वानिरूपितविषयतयाज्ञान दर्शनात्, व्यभिचारेणैतादृशकार्यकारणभावासत्त्वान्निर्विकल्पकविषयत्वं घटस्यायात्येव, अतः परञ्च निरवच्छिन्नप्रकारतासम्बन्धेन ज्ञानं प्रति जातित्वेन हेतुत्वमास्थेयमिति घटादेः प्रकारत्वानिरूपितप्रकारतावारणमिति।

न च परम्परास्थले तावतां घटकानामेकैकपर्याप्तसंसर्गतेति वाच्यम्, संयुक्तसमवायसमवेतसंयोगयोरविशेषप्रसङ्गात् तावतामुभयत्र संसर्गत्वादिति चेत्केनायमक्षपातः कृतो यद्बलेन सर्वासामेव संसर्गतानां विनिगमनाविरहात् प्रकारत्वविशेष्यत्वोभयनिरूपितत्ववारणम्।

न च संयोगावच्छिन्नवह्न्याद्यभावबुद्धिप्रतिबध्यत्वं संयुक्तसमवायेन बुद्धेस्स्यात् इत्येतद्वारणाय भिन्नस्थल एव प्रकारताविशेष्यतानिरूपितत्वद्वयमास्थेयमिति वाच्यं, कया रीत्या भिन्नस्थले स्वीकरणीयमित्यत्र विनिगमकाप्राप्तेरनायत्या तदन्यसंसर्गानवच्छिन्नविशेष्यत्वस्य प्रतिबध्यतावच्छेदकत्वस्वीकारादेव प्रामाण्यनिर्वचनम्। न च यदीयत्वेन[2] यः स[3]म्बन्धो भासते त[4]न्निष्ठसंसर्गता त[5]न्निष्ठविषयतानिरूपिततेति वाच्यम्, तदनुयोगिकत्वतत्प्रतियोगिकत्वस्य विशिष्टज्ञाने भानाभावात्, वस्तुगत्या यो यदीयस्सम्बन्धस्तत्रैव तद्विषयत्वनिरूपितत्वमित्यपि न, व्यधिकरणस[6]म्बन्धेन विशिष्टबु[7]द्धेरसत्त्वाद्विशेष्यप्रकारयोर्द्वयोरेव सम्बन्ध इति विशेष्यताप्रकारतोभयनिरूपितत्वस्य सर्वत्रौचित्यात्,

१ तत्=परम्परासम्बन्धस्थलीयघटादिबुद्धिः। २ यदीयत्वेन=घटपटीयत्वेन। ३ यस्सम्बन्धः=संयोगादिसम्बन्धः। ४ तन्निष्ठः=संयोगादिनिष्ठः। ५ तन्निष्ठः=घटादिनिष्ठः। ६ व्यधिकरणं=संयोगादि। ७ विशिष्टबुद्धेः=संयोगेन रूपवानितिबुद्धेः।

तस्मात् प्रकारतासंसर्गताविशेष्यतानां निरूप्यनिरूपकभावत्रयं यथाविनिगमनाविरहात् तथा विशेष्यवृत्तिसम्बन्धनिष्ठाया एव प्रकारताविशेष्यत्वोभयनिरूपितत्वमस्तु, संसर्गतानिरूपितत्वञ्च विशिष्टमेव संसर्गतानामुत मध्यमायाः कस्याश्चित्तदुभयनिरूपितत्वमुतप्रकारवृत्तिसम्बन्धनिष्ठायाः, किम्वा प्रकारीयसम्बन्धनिष्ठा च विशेष्यतानिरूपिते सर्वासामेव प्रकारतानिरूपितत्वेनोक्तकार्यकारण[1]भावे व्यभिचाराभावात् ।

न च प्रकारतात्वविषयतात्वयोस्समशरीरतया निरवच्छिन्नप्रकारतासम्बन्धेन ज्ञानम्प्रत्यस्तु कारणता जातित्वेनेति, घटादेर्निरवच्छिन्नविषयतया निर्विकल्पके भानमिति वाच्यम्, सामान्यतो लाघवात् विषयत्वस्यैव तत्र[2] निवेशात्, प्रयोजनशून्याया निर्विकल्पकविषयताया घटादौ वारकत्वस्यापि विषयतात्वेन निवेशे विनिगमकत्वाच्चेति चेन्मैवम्, घटीयसंयोगत्वादिना यत्र संसर्गता तत्र घटीयत्वविशिष्टसंयोगत्वेऽवच्छेदकत्वाख्या विषयता तन्निरूपिता घटादाववच्छेदकता तन्निरूपिता च घटत्व इति प्रकारत्वानिरूपितावच्छेदकत्वाख्यविषयता जात्यतिरिक्तेऽपि घटीयत्वघटादिपदार्थेऽतः प्रकारत्वानिरूपितविषयतया ज्ञानं प्रति जातित्वेन कारणत्वे व्यभिचार इति, प्रकारत्वानिरूपितप्रकारतया ज्ञानं प्रति जातित्वेन कारणत्वमास्थेयमिति । तथाविधविषयतामात्रेण घटादौ निर्विकल्पक, ·········तत्वात् ।

न चावच्छेदकताविषयतैव नेति वाच्यम्, संसर्गताया इव विनिगमनाविरहादेवास्या[3] अपि तत्स्वी[4]कारादिति । न च घटीयसंयोगादिना संसर्गस्थले घटीयत्वादौ संयोगे च पर्याप्ता संसर्गतैव नत्ववच्छेदकत्वाख्यापि विषयतेति वाच्यम्, संयुक्तपदार्थीयसमवायसमवेतपदार्थीयसंयोगयोरविशेषापत्तेस्तावतामुभयत्रसंसर्गत्वसत्त्वात् । पीतशङ्खीयसंयोगत्वादिना रूपीयसंयोगत्वेन यत्र संसर्गता तत्र विशिष्टस्याप्रसिद्ध्या संसर्गतापर्याप्तिस्थलाऽप्रसिद्धेश्च । अथ पीतशङ्खीयसंयोगत्वादिना संसर्गता जलादेः प्रकारताशङ्खादेर्विशेष्यता यत्र ज्ञाने[5] तत्यज्ञानस्य

---

१ उक्तकार्यकारणभावे = निरवच्छिन्नप्रकारतासम्बन्धेन ज्ञानं प्रति जातित्वेनकारणतेतिकार्यकारणभावे । २ तत्र = उक्तकार्यकारणभावे । ३ अस्याः = अवच्छेदकतायाः । ४ तत् = विषयत्वं । ५ यत्र ज्ञाने = पीतशङ्खीयसंयोगेनजलवान्शङ्ख इति ज्ञाने ।

भ्रमत्वमस्ति तच्च न, जलांशे तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववति तादृशसम्बन्धेन तत्प्रकारकत्वस्य तद्भ्रमत्वादेस्तादृश[1]सम्बन्धाप्रसिद्धेश्च नैतादृशसम्बन्धावच्छिन्नाभाववान् शङ्ख इत्यतोऽवच्छेदकपीतत्वाद्यंश एवास्य[2] भ्रमत्वम् । एवम्, स्वसमवेताकाशसमवायित्वादिरूपपरम्परासम्बन्धेन यत्र घटादिः कुत्रापि ग्रहीतस्तत्रापि संसर्गांश एव भ्रमत्वमित्येतन्निर्वाहायावच्छेदकतासंसर्गताप्रकारतासाधारणैको धर्मः विशेषणतात्वरूपः संसर्गतावच्छेदकताविशेष्यतासाधारणश्चापरो [धर्मः] विशेष्यतात्वरूप इति तदभाववद्विशेष्यताकतद्विशेषणताकत्वं भ्रमत्वम्, तद्वद्विशेष्यताकतद्विशेषणताकत्वञ्च प्रमात्वमिति । तथा[3] च पीतत्वाभाववत् शङ्खनिष्ठावच्छेदकताख्या विशेष्यता तन्निरूपिता च पीतत्वे विशेषणत्वाख्यावच्छेदकतेति ।

एवं संसर्गतारूपां विशेष्यतां तद्रूपां विशेषणताञ्चादाय परम्परासंसर्गस्थले[4] भ्रमत्वप्रमात्वे, ह्रदो वह्निमान् पर्वतो वह्निमानित्यादेश्च विशेष्यतारूपां विशेष्यतां प्रकारतारूपाञ्च विशेषणतामादाय भ्रमत्वप्रमात्वे निर्वक्तव्ये । एवं स्थिते विशेषणत्वानिरूपितविषयितासम्बन्धेन ज्ञानं प्रति जातित्वेन कारणत्वं वाच्यं, घटादिपदार्थस्य यावच्छेदकता सा[5] विशेषणत्वाख्यावच्छेदकतानिरूपितैवेति न व्यभिचारः । अत[6] एवावच्छेदकया निरवच्छिन्नया प्रकारतया च तथाविधया जात्यतिरिक्तस्य भानं वारितम् । निर्विकल्पकस्यापि विशेषणत्वानिरूपितैव विषयतेति न तद्विषयत्वं घटादेरिति चेत्, अपूर्वोऽयं शास्त्रार्थो यन्निरुक्तव्यपदेश्यादि पदार्थकल्पनम्, एवं सति घटपटादिभेदेनापि प्रमात्वभ्रमत्वभेदो न स्यात्, प्रमीयप्रकारतासु भ्रमीयप्रकारतास्वप्येकं धर्मं कल्पयित्वा तद्धर्मप्रकारताकत्वस्यानुगतलक्षणस्य सम्भवात्, तस्मात् पीतत्वनिष्ठप्रकारतानिरूपितत्वाभाववद्विशेष्यताकत्वं, पीतत्वनिष्ठावच्छेदकतानिरूपितपीतत्वाभाववन्निष्ठावच्छेदकताकत्वमित्याद्यननुगतमेवाप्रामाण्यम् ।

---

१ तादृशः = पीतशङ्खीयसंयोगादिः । २ अस्य = पीतशङ्खीयसंयोगेन जलवान्शङ्ख इति ज्ञानस्य । ३ तथाच = एतादृशरीत्या भ्रमत्वप्रमात्वनिर्वचने च । ४ परम्परासंसर्गस्थले = स्वसमवेताकाशसमवायित्वादिरूपपरम्परासम्बन्धस्थले । ५ सा = अवच्छेदकता । ६ अत एव = विशेषणत्वानिरूपितविषयतासम्बन्धेन ज्ञानं प्रति जातित्वेन कारणत्वमितिकार्यकारणभावादेव ।

किञ्च तत्संसर्गावच्छिन्नप्रतियोगिताकतदभाववद्विशेष्यितानिरूपित-तत्संसर्गावच्छिन्नतन्निष्ठविशेषणताकत्वमप्रमाण्यमवश्यं वाच्यम्, अन्यथा,[1] घटव ढ्भूतलत्यस्याप्यप्रमात्वापातादिति संसर्गतावच्छेदकतया च भातस्य[2] संसर्गो न भासत इति तेषामपि सम्बन्धो भासत इत्यस्यानवस्थाभयेनैवास्वीकारात्, विशेषणतात्वादिस्वीकारेऽपि भ्रमत्वं स्वारसिकं तेषु ज्ञानेषु न स्थापयितुं शक्यत इति तद[3]-स्वीकारात्। तथा[4] च पीतशङ्खीयसंयोगसम्बन्धावच्छिन्नाभावः शङ्खे एतदभावस्य प्रतियोगिता संयोगावच्छिन्ना, संयोगे शङ्खीयत्वं तदुपरि शङ्खस्तदुपरि[5] पीतत्वमवच्छेदकतावच्छेदकं व्यधिकरणमित्ययमभावः[6] केवलान्वयीत्येतादृश[7]-तया संयोगावच्छिन्नजलाभाववति शङ्खे तादृशतया संयोगसंसर्गकजलप्रकारकत्वस्य भ्रमत्वसम्भवादिति। इत्थञ्च निरवच्छिन्नप्रकारतया ज्ञानं प्रति जातित्वेन कारणत्वं, निरवच्छिन्नावच्छेदकतया ज्ञानं प्रत्यपीति कार्यकारणभावद्वयमनाथ[8]-त्या वाच्यम्, तस्मात्[9] निरवच्छिन्नावच्छेदकतया तथाभूतप्रकारतया च मा भवतु घटादौ निर्विकल्पकं निरवच्छिन्नविषयतामात्रेण तु भविष्यत्येवेति, अत एव,

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति—
स्तद्बाधके बलिनि वेदनये जयश्रीः।
नो चेदनिन्द्यमिदमीदृशमेव विश्वं
तथ्यं तथागतमतस्य तु कोऽवकाशः। इत्यात्मतत्वविवेके आचार्याः।

ननु प्रकारत्वानिरूपितविषयतानिरवच्छिन्नविषयतातत्कज्ञानं निरवच्छिन्नतत्प्रकारकज्ञाने कारणमित्यतोऽवच्छेदकतायाः प्रकारत्वानिरूपितत्वेन

---

१ अन्यथा = एतादृशाप्रमात्वास्वीकारे। २ भातस्य = ज्ञातस्य। ३ तत् = विशेषणतात्वादि। ४ तथा च = विशेषणतात्वाद्यस्वीकारे च। ५ तदुपरि = शङ्खोपरि। ६ अयमभावः = पीतशङ्खीयसंयोगसम्बन्धावच्छिन्नाभावः। ७ तादृशः = केवलान्वयी। ८ कार्यकारणभावद्वयं = निरवच्छिन्नप्रकारतया ज्ञानं प्रति जातित्वेन कारणतेत्येकः कार्यकारणभावः, निरवच्छिन्नावच्छेदकताकज्ञानं प्रति जातित्वेन कारणतेत्यपरः कार्यकारणभावः ९ तस्मात् = द्विविधकार्यकारणभावात्।

तद्विषयताकज्ञाने सति स्वरूपतो घटत्वादिप्रकारकज्ञानापत्तिः, नचेष्टापत्तिः अन्यथा[1] मनःपदशक्तिग्रहो न स्यात्। अस्माकन्तु मनोविशिष्टसंयोगादिना संसर्गताकज्ञानानन्तरं मनस्त्वे स्वरूपतः प्रकारतया ज्ञानसम्भवादिति वाच्यम्, एवम् क्रमेण विशिष्टज्ञानस्वीकारे सर्वज्ञत्वापत्तेः, अपूर्वचैत्रत्वादावप्येतादृशरीत्या स्वरूपतः प्रकारताकज्ञानसम्भवात्। न चेष्टापत्तिः चैत्रं मैत्रो जानाति न वेति देवदत्तादीनां सन्देहो न स्यात्, एतादृशसन्देहप्रतिबन्धकस्य चैत्रविषयकज्ञानवान् मैत्र इत्याकारकनिर्णयस्य तावत्पदार्थस्य खण्डश उपस्थितत्या सम्भवादित्यत्र वैकल्यं केवलं चैत्रत्वादौ स्वरूपतः प्रकारतायाः चैत्रत्वादेरुपस्थितत्वेन दूरगतमेवेति। मनःपदशक्तिग्रहश्च स्वरूपतः स्मरणेन,[2] तच्च तथानुभवेन,[3] स च स्मरणेन इत्येवं रीत्यानादित्वेनैव निर्वाह्यत इति चेन्न, अवच्छेदकत्वान्यस्वरूपतो घटत्वादिविषयकज्ञानत्वेनेति विशेषणज्ञानकारणत्वात्। नन्वेवं निर्विकल्पकानन्तरं घटत्वस्येव घटस्यापि विशिष्टबुद्धिस्स्यादिति चेन्न, इष्टापत्तेः।

गौडास्तु घटवदित्यादिबुद्धौ घटीयप्रकारतायां घटत्वाद्यवच्छिन्नत्वं स्वरूपसम्बन्धरूपं मन्वानास्तदवच्छिन्नप्रकारताकबुद्धिं[4] प्रति तत्प्रकारकज्ञानत्वेन[5] हेतुत्वमूरीकुर्वन्तः स्वरूपसम्बन्धरूपावच्छेदकत्वानाश्रयप्रकारतया ज्ञानं प्रति जातित्वेन च हेतुत्वं वदन्तो निर्विकल्पकद्वितीयक्षणे घटादिप्रकारकं ज्ञानं वारयन्ति, तन्न, स्वरूपसम्बन्धात्मकप्रकारतावच्छेदकत्वे मानाभावादित्यन्यत्र विस्तरः।

ननु प्रतियोगितायामवच्छिन्नत्वं न स्वीकार्यमेवातः सुतरां घटत्वाद्यवच्छिन्नत्वेन न प्रतियोगित्वस्य संसर्गत्वं, न च घटत्वावच्छिन्नत्वेन प्रतियोगित्वं यदा घटाभावसंसर्गः तदैव घटवत्ताज्ञाने प्रतिबन्धकं, यत् किञ्चिद्घटाभावज्ञानस्याप्रतिबन्धकत्वादित्यवच्छेदकत्वं तज्ज्ञानश्रायाग्येनेति वाच्यं, घटत्वावच्छिन्नत्वेन या प्रतियोगिताव्यक्तिः भवतामभिमता तत्संसर्गकज्ञानत्वेन[6] प्रतिबन्धकत्वस्वीकारात्। किञ्च शुद्धघटत्वावच्छिन्नप्रकारतानिरूपितप्रतियोगितासंसर्गकाभावज्ञानत्वेन प्रतिबन्धकत्वं, पीतघटाभाववानित्यादेर्वारणात्, शुद्धघ-

---

1 अन्यथा = इष्टापत्तौ। २ तच = स्मरणं। ३ सच = अनुभवः। ४ तदवच्छिन्नः = घटत्वाद्यवच्छिन्नः। ५ तत् = घटवादि। ६ तत्संसर्गकः = प्रतियोगितासंसर्गकः।

टत्वं प्रतियोगिनि नीलघटत्वावच्छिन्नाप्रतियोगितासम्बन्ध इत्यस्य भवताप्यनभ्युपगमेन दोषाभावादिति चेन्न, कम्बुग्रीवादिमान्नास्तीत्यादेश्च सत्वसम्पत्त्यर्थमवच्छेदकतायां प्रतियोगिविशेषणतापन्नस्य भानस्वीकारादवच्छेदकतापदार्थतद्भानयोरावश्यकत्वात् ।

एवं प्रमेयं नास्तीत्यादेरपि भ्रमत्वात्, अभावे प्रमेयस्य शुद्धप्रतियोगितया सत्वात्तदंशे भ्रमत्वायोगात्, प्रमेयत्वावच्छिन्नत्वेन प्रतियोगितायास्संसर्गत्वमते तदंश[1] एव भ्रमत्वसम्भवात् ।

न च प्रमेयत्वावच्छिन्नप्रतियोगितासम्बन्धनावच्छिन्नाधिकरणता समवायावच्छिन्नाभावे वर्त्तते, न वर्त्तते च विशेषणतासम्बन्धावच्छिन्नाभावे, तत्र[2] तथाविधाधिकरणतया प्रमेयग्रहणात्तस्य भ्रमत्वं, गुणे विशिष्टसत्ताया इवेति वाच्यम् । सामानाधिकरण्येन विशेषगुणस्थल एव एतादृशरीतेरभ्युपगमादन्यत्रासम्भवात्, अन्यथा[3] संयोगेन क्वचिदेव घटत्वावच्छिन्नाधिकरणता क्वचिन्नेत्यपि स्यादतिरिक्तपदार्थकल्पनाया अविशेषादवच्छेदकत्वस्याप्यपराधाभावात् ।

किञ्च नञादिसमभिव्याहारस्थलेऽन्वयितावच्छेदकावच्छिन्नत्वविशिष्टप्रतियोगित्वं सम्बन्धीभूय भासत इति शाब्दीव्युत्पत्तिरप्येवमेव निर्वहतीत्यवच्छेदकत्वस्यावश्यकत्वात् । एतादृशव्युत्पत्त्यस्वीकारे च घटवति घटो नास्तीति शब्दस्य प्रमाणत्वापत्तेः न च तद्धर्मा[4]वच्छिन्नाधिकरणत्वसम्बन्धेन तद्धर्मविशिष्टो[5]ऽभावो परिभासत इति व्युत्पत्तिः घटवति च घटत्वावच्छिन्नाधिकरणत्वेन घटवतोऽभावस्यासत्त्वात्तस्या प्रमाणत्वमिति वाच्यम् । अतिरिक्तवस्तुनस्संज्ञायां विवादात् , घटाधिकरणतातः घटत्वावच्छिन्नाधिकरणत्वस्याकॢप्तस्य स्वीकारस्तस्य[6] च घटत्वावच्छिन्नत्वं स्वीकार्यमित्यतो घटत्वावच्छिन्नत्वमात्रस्य प्रतियोगित्वे लघुत्वाच्च ।

---

१ तदंशे = प्रतियोगित्वांशे । २ तत्र = विशेषणतासम्बन्धावच्छिन्नाभावे । ३ अन्यथा = अन्यत्राप्येतादृशरीतिस्वीकारे । ४ तद्धर्मः = घटत्वादिः । ५ तद्धर्मविशिष्टः = घटत्वादिविशिष्टो घटादिः । ६ तस्य = अधिकरणत्वस्य ।

अथैवमपि प्रतियोगितासम्बन्धावच्छिन्नप्रकारतायाः किञ्चिद्धर्मावच्छिन्नत्वनियमः, अन्यथा[1] घटत्वाभावस्य घटोऽभाव इति प्रत्ययापत्तिः, तद्धर्मा[2]वच्छिन्नप्रकारताकज्ञाने च तद्धर्मप्रकारकज्ञानं कारणमित्यस्य घटवद्भूतलमित्याद्यनुरोधेनैव स्वीकारः। एवं स्थिते निर्विकल्पकोत्तरं प्रतियोगितया घटस्य प्रकारता यद्धर्मावच्छिन्ना भविष्यति तत्प्रकारकज्ञानमेव नास्तीत्यत एव घटो नास्तीत्यादिवारणे प्रतियोगितावच्छेदकप्रकारकज्ञानस्य कारणत्वन्न स्वीकार्यमेव। न च प्रकारतायाः स्वरूपसम्बन्धावच्छिन्नत्वं न स्वीक्रियत एव मानाभावात्, किन्तु किञ्चित्प्रकारतानिरूपितविशेष्यत्वाभिन्नत्वरूपं, तस्य[3] च निर्विककल्पकानन्तरमपि घटवद्भूतलमित्यादेरिव घटत्वोपस्थितौ घटत्वनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यत्वाभिन्नप्रकारतानिरूपितप्रतियोगितासंसर्गताकाभावप्रत्यक्षसम्भव एव, विशेष्यत्वाभिन्ना च प्रकारता घटघटत्वयोरुपस्थित्यैव सम्पाद्या, अतः प्रतियोगितावच्छेदकप्रकारकं ज्ञानं हेतुरिति वाच्यम्। एवमपि निर्विकल्पकानन्तरं घटवद्भूतलमित्याद्यपि नाभ्युपेयते, घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारताकज्ञाने घटत्वप्रकारकज्ञानस्य हेतुत्वात, एतादृशमेव चाभावप्रत्यक्षमित्यत एव निर्विकल्पकानन्तरं वार्यत इति।

ननु घटत्वादिनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारताकस्वरूपविशिष्टवैशिष्ट्यावगाहित्वावच्छिन्नं प्रति घटत्वादिप्रकारकज्ञानत्वेन कारणत्वेऽपि तादृश[4]ज्ञानासत्त्वदशायामिन्द्रियसम्बद्धविशेषणतया नेत्याकारकज्ञानापत्तिः, न च नेत्याकारकं प्रत्यक्षमप्रसिद्धमेव, किमापद्यत इति वाच्यम, घटादिज्ञानशून्यकाले इन्द्रियसम्बद्धविशेषणतयाऽभावोपरि समवायादाविव जन्यतां तस्य चार्थत एव केवलमभावत्वं प्रकारीभविष्यतीति नेत्याकारकतापत्तेः।

न चैवं सत्यस्तु समवायादेरिवाभावस्यपि विषयमर्यादया हेतुत्वं, तथा च समवायाद्युपरि या सामग्री सा नाभावे समवायस्य तादात्म्येनासत्त्वात, अभावपृत्तिविषयताया प्रत्यक्षं प्रत्यभावत्वेन कारणत्वमित्थञ्चाभावे सन्निकर्षसहिताऽ-

---

१ अन्यथा = एतन्नियमास्वीकारे। २ तद्धर्मः = घटत्वादिः। ३ तस्य = तादृशविशेष्यत्वाभिन्नत्वरूपस्य। ४ तादृशः = घटत्वादिप्रकारकः।

स्ति, परन्त्वभाववृत्तिविषयतायास्तमस्त्वाद्यनिरूपितायाः विशिष्टवैशिष्ट्यविषयतात्वनियमेन यद्विशिष्टवैशिष्ट्यावगाहिनी विषयता भविष्यति तादृशघटत्वादिप्रकारकज्ञानविरहान्नापत्तिस्तदानीमिति वाच्यं। प्रतियोगितासम्बन्धेन घटीयो नाभाव इति बाधदशायां घटत्वप्रकारकज्ञानस्यापि सत्त्वात् नेत्याकारकप्रत्यक्षापत्ते दुस्समाधेयत्वात्, तत्र[1]ाभावोपरि घटो बाधादेव न भासिष्यतीति। न चायं बाधो[2] नाभावत्वावच्छेदेन प्रतियोगितासम्बन्धावच्छिन्नाभावे घटस्य प्रतियोगिताया ग्रहात्, किन्तु तत्[3]सामानाधिकरण्येनायञ्च न विशिष्टबुद्धिसामान्यविरोधीति तत्र घट एवाभावो परिभासिष्यतीति वाच्यं, अभावावृत्तिर्घट इत्याकारकबाधस्थले तदसम्भवात् प्रतियोगिज्ञानं कारणम्, न च तदप्यस्त्येवात्रातः कथं तत्कारणत्वस्वीकारेणापत्तिवारणं प्रकृत इति वाच्यम्, प्रतियोगिज्ञानहेतुत्वे घटत्वप्रकारकज्ञानत्वेन कारणत्वं, घटत्वावच्छिन्नप्रकारत्वान्यप्रतियोगितासम्बन्धावच्छिन्नप्रकारत्वानिरूपिताभावनिष्ठविषयताकप्रत्यक्षत्वेन कार्यत्वम्, नेत्याकारकप्रत्यक्षस्य च घटपटादिनिखिलप्रतियोगिज्ञानजन्यतावच्छेदकतत्तदवच्छिन्नप्रकारत्वान्यप्रतियोगितासम्बन्धावच्छिन्नप्रकारत्वानिरूपिताभावविषयताकत्वेनाभिमतस्य निखिलप्रतियोगिज्ञानजन्यतावच्छेदकावच्छिन्नस्यैकदा निखिलज्ञानासत्त्वादर्थत एव वारणात्।

यद्वा घटत्वादिप्रकारकज्ञानत्वेन हेतुत्वं, घटत्वावच्छिन्नप्रकातानिरूपितप्रतियोगिनिष्ठसांसर्गिकविषयतानिरूपिताभावनिष्ठविशेष्यताकज्ञानत्वादीनां जन्यतावच्छेदकत्वेनोक्तबाधस्थले[4] सामग्रीसत्त्वे प्रतियोगिज्ञानरूपायाः विशेषणसामग्र्याः विरहेणैव नेत्याकारकप्रत्यक्षापत्तिवारणम्। अभावनिष्ठलौकिकप्रत्यक्षसामान्यस्यैव प्रतियोगिज्ञानविशेषणसामग्रीसापेक्षत्वादिति चेन्न, विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वेन नेत्याकारकप्रत्यक्षापत्तेः कर्त्तुमशक्यत्वात्, तथा हि उक्तबाधसत्त्वे घट इति ज्ञाने सति अभावोपर्यपि लौकिकविषयताया ज्ञानमभ्युपेयत एव, कस्यचित पदार्थस्योपस्थितेर्बाधाभावस्य चावश्यकत्वादन्ततो वृत्तित्वमेव तथा वृत्तित्वबाधस्याभावोपरि स्थापयितुमशक्यत्वात्। न च वृत्तित्वाभाव इति ज्ञानस्य घटाद्यभावे सन्निकृष्टेऽभावत्वमात्रप्रकारताकत्वादपि नेत्याकारकत्वमिति वाच्यं, घटो नास्तीति ज्ञाने पटाद्यभावस्य सन्निकृष्टस्य भानेऽपि नेत्याकारक-

---

१ तत्र = नेत्याकारकप्रतीतौ। २ अयं बाः = घटीयो नाभाव इति बाधः। ३ तत् = अभावत्वंः। ४ उक्तबाधः = अभावो न घटीयं इति बाधः।

त्वानभ्युपगमात् केचित्तु,यदभावोपरि प्रतियोगी न भासते तत्राभावे लौकिकविषयतया ज्ञानं न स्वीक्रियत एव,तद्वारणञ्च घट इत्यादिज्ञानस्य घटप्रकारकघटाभावविशेष्यकत्वं कार्यतावच्छेदकमास्थाय क्रियते,तज्ज्ञानस्य घटोऽभाववृत्तिरित्याकारकबाधाभावसंयुक्तविशेषणतयोः सहकारित्वमास्थाय शक्यते कर्त्तुम्। विशेषणतावच्छेदकप्रकारकज्ञानत्वेन कारणत्वे तु सहकारित्वासम्भवो बाधाभावेन समम्, तादृशबाधे विद्यमानेऽपि घट इति विशेषणतावच्छेदकप्रकारज्ञानेन फलजननात्, एवम्, संयुक्तविशेषणतयापि घटीयबाधाभावासहकारेण पटादिज्ञानसहकारेण फलजननात्। प्रतियोगिज्ञानहेतुत्वेन घट इति ज्ञानं घटो नाभाववृत्तिरिति बाधाभावसंयुक्तविशेषणता च सम्भूय फलं जनयतीति पटो नास्तीति ज्ञाने घटाभावाभानवारणम्। एतदपेक्षया[1]-चैत्रीयाभाववृत्तिविषयतासम्बन्धेन लौकिकप्रत्यक्षं प्रति स्व[2]प्रकारावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन चैत्रीयज्ञानत्वेन हेतुत्वं युक्तम्, घटपटादिज्ञानभेदेन कारणत्वानन्त्याभावात्, चैत्रादेस्तु प्रतियोगित्वेनापि निवेश इति चैत्राद्यपेक्षया प्रतियोगिना[3]माधिक्यादित्याहुः। तन्न, तमस्त्वेनाभावग्रहाभ्युपगन्तृणामस्माकं घटो नास्तीतिबुद्धौ पटाभावविषयत्वेऽप्यविरोधात्, लौकिकविषयतया यत्रा[4]भावत्वं भासते तत्रा[5]वश्यं कोऽपि प्रतियोगी भासत एवेत्यस्यानुभवस्य स्थापितत्वात्, प्रतियोगिज्ञानत्वेनाहेतुत्वेऽपि विशेषणतावच्छेदकप्रकारकज्ञानहेतुत्वस्मादृत्याभावत्वीयलौकिकविषयताप्रतियोगितासम्बन्धावच्छिन्नविशिष्टवैशिष्ट्यबोधीयविषयताव्याप्त्या, यथाविशेष्यताप्रकारताव्याप्त्येति न केवलं विशेष्यतया ज्ञानं, किन्तु घटीयत्वेन पटाभावग्रहे ईदृशाकारणत्वस्य व्यभिचारः।

न च प्रतियोगितासम्बन्धेनारोपो न स्वीक्रियत एवेति वाच्यम्, प्रमेयं नास्तीत्यत्राप्रतिकारात्। एवं रीत्या निर्वाहादेव दीधितिकृद्भिः प्रतियोगिविशेषिताभावप्रत्यक्षन्तु विशिष्टवैशिष्ट्यमर्यादान्नातिशेत इत्युक्त्वा प्रतियोगिज्ञानहेतुत्वंखण्डितम्।

ननु कुत्रायं विशेषणतावच्छेदकप्रकारकज्ञानकारणत्वं क्लृप्तं यद्बलेन

---

१ एतदपेक्षया = सम्भूयकारणत स्वीकारापेक्षया। २ स्वं = चैत्रीयज्ञानं। ३ प्रतियोगिनां = घटपटादीनां। ४ यत्र = यादृशस्थले। ५ तत्र = तादृशस्थले।

प्रतियोगिज्ञानन्यकारः, विशेषणतावच्छेदकप्रकारकनिश्चयत्वयं न भवत्येव, घट इति बोधस्य निर्द्धर्मितावच्छेदकत्वात् । न च निर्विकल्पकानन्तरं घटवद्भूतलमिति ज्ञानानुदयादेव घटत्वप्रकारकज्ञानं घटत्वावच्छिन्नप्रकारताकज्ञाने कारणमिति वाच्यम् तदनन्तरं[1] घटवदित्यभ्युपगमे क्षत्यभावात् क्षणिकविलम्बस्य शपथैकश्रद्धेयत्वात् ।

न च तदनन्तरज्ञाने घटस्य निरवच्छिन्नप्रकारता स्यादिति वाच्यम्, प्रकारत्वानिरूपितत्वस्यैव प्रकारतायां निरवच्छिन्नत्वात् स्वरूपसम्बन्धावच्छिन्नत्वे प्रकारतायां मानाभावात् इत्यस्योक्तत्वात् । तथा च प्रतियोगिज्ञानत्वेन विशेषणज्ञानत्वेन वा हेतुत्वमित्यविशेष एव प्राचीनानां सम्मतम् । विशेषणतावच्छेदकप्रकारकज्ञानत्वेन हेतुत्वमादाय प्रतियोगिज्ञानकारणत्वान्यथाकरणमसङ्गतमिति चेदत्राभाति घट इति ज्ञानं कारणमित्यंशे न विवादः, किन्त्वेतत्कार्यतावच्छेदकं घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारतानिरूपिताभावविशेष्यताकत्वं, घटत्वनिष्ठप्रकारतानिरूपितविशेष्याभिन्नप्रकारताकत्वं वेत्यत्रैव विवादात्, तत्राद्यपक्षे[2] प्रतियोगिज्ञानत्वं घटज्ञानस्योच्यते, द्वितीये[3] च विशेषणतावच्छेदकप्रकारकज्ञानत्वमिति । एवञ्च लाघवात् द्वितीयमेव कार्यतावच्छेदकमभावविशेष्यत्वानिवेशात् . अतः परञ्च निर्विकल्पकानन्तरं क्षणैकविलम्बेन घटवद्भूतलमित्यपि स्वीक्रियत इत्यत्र एव सर्वानुभवविरुद्धं निर्विकल्पकानन्तरं घटो नास्तीति ज्ञानं वार्यत एवेति किमर्थं प्रतियोगिज्ञानं कारणमिति चेदत्र साम्प्रदायिकाः । निर्विकल्पकानन्तरं घटवद्भूतलमिति जायत एव, नतु घटो नास्तीत्यनुभवदार्ढ्यादभावविशेष्यतापन्नान्तर्कार्यतावच्छेदकमुच्यते प्रामाणिकत्वाद् गौरवस्येति वदन्ति । वयन्तु यदा स्वरूपतो घटत्वं ज्ञातं तदा प्रतिप्रतियोगितावच्छेदकत्वांशे घटत्वस्य निरवच्छिन्नैवावच्छेदकताऽनुभूयते, यदा च जातित्वादिना तदा जातित्वावच्छिन्नैवावच्छेदकता। एवं जातिमान् घटो नास्तीत्यपि जायत इति स्वरूपतो घटत्वं प्रकारकं ज्ञानं कारणम्

---

१ तदनन्तरं = घटत्वप्रकारकज्ञानानन्तरं । २ आद्यपक्षे = घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारतानिरूपिताभावविशेष्यताकत्वमिति पक्षे । ३ द्वितीये = घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारताकत्वमिति पक्षे ।

निरवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठसंसर्गतानिरूपिताभाव विशेष्यताकत्वस्य कार्यतावच्छेदकत्वमेवं तद्रूपेण घटत्वप्रकारकज्ञानत्वेन हेतुत्वं तद्धर्मावच्छिन्नघटत्वनिष्ठावच्छेदकताकाभावज्ञानत्वं कार्यतावच्छेदकमिति।

यत्तु स्वा[1]वच्छिन्नप्रतियोगिताकत्वेनाभावोपरि घटत्वं घटो नास्तीति प्रतीतौ भासते तच्च विशेषणज्ञानहेतुत्वेनैव निर्वहतीति, तन्न, घटत्वाभाववानभाव इति बाधप्रतिबध्यत्वस्य घटो नास्तीत्यादावापत्तेः, घटत्वेनाभावं जानामीत्यभावज्ञानानुव्यवसायापत्तेश्च पारतन्त्र्यप्रकारत्वास्वीकारादिति। एतच्च प्रतियोगिताया धर्मावच्छिन्नत्वनयेन वस्तुतः प्रतियोगितावच्छेदकत्वास्वीकार एव युक्तः, बाधप्रतिबध्यप्रतिबन्धकभावस्यावच्छेदकतां विनापि निर्वाहितत्वात्। कम्बुग्रीवादिमान्नास्तीत्येतस्य घटशून्ये प्रमात्वं, घटवति च सामान्याभावव्यक्त्यभावात् भ्रमत्वं, सर्वत्रैव तद्भ्रमत्वन्तु वासानाविशेषविलसितमेव। विशेषणतया प्रमेयं नास्तीति ज्ञानस्य भ्रमत्वञ्च विशेषणतासम्बन्धावच्छिन्नाभावे एतद्देशवृत्तौ प्रमेयसामान्यस्य प्रतियोगितासंसर्गेण ग्रहादेव।

न चाकाशतदन्योभयाद्यवच्छिन्नाभावे एतद्देशवृत्तौ प्रमेयसामान्यभस्त्येवातो भ्रमत्वं न स्यादिति वाच्यम् व्यासज्यवृत्ति[2]धर्मावच्छिन्नाभावस्थले तद्ध[3]र्मावच्छिन्नाधिकरणतासम्बन्धावच्छिन्नप्रतियोगिताकत्वं तदभावस्येत्येवार्थः।

अन्यथा[4] एकैकवत्युभयाभावासत्त्वप्रसङ्गः, उभयत्वस्यैकैकवृत्तित्वस्वीकारात्, उभयत्ववतस्तत्र[5] सत्त्वात। य एव चोभयवानितिप्रतीतिनियामकस्स एव चोभयन्नास्तीत्यादौ प्रतियोगितावच्छेदकतयाभ्युपेयः, स चाधिकरणताविशेष एव, न तूभयत्वं। तथा च शुद्धविशेषणतासंसर्गावच्छिन्नाभावे प्रमेयसामान्यस्यासत्त्वादेव तत्सामान्यग्रहणात् प्रमेयं नास्तीत्यादेर्भ्रमत्वम्। एवमेव घटवति घटो नास्तीत्यादेरपि भ्रमत्वं, घटपटोभयाभावस्य तत्र[6] सत्त्वेऽपि संयोगसम्बन्धावच्छिन्नाभावे एतद्देशवृत्तौ प्रतियोगितया घटसामान्याभावस्यासत्त्वात्।

---

१ स्वं = घटत्वं। २ व्यासज्यवृत्तिः = उभयवृत्तिः। ३ तद्धर्मः = उभयत्वं। ४ अन्यथा = एतादृशार्थाकरणे। ५ तत्र = एकैकवति। ६ तत्र = घटवति।

शाब्दव्युत्पत्तिश्चान्वयितावच्छेदकविशिष्टस्य सकलस्याभावेऽन्वय इति न तदनुरोधेनावच्छिन्नत्वम् । अत एव, प्रतियोगितायामन्यूनवृत्तित्वं तद्धर्मावच्छिन्नत्वं ग्रन्थकृद्भिरुच्यते। बाधप्रतिबन्धकत्वे तु निरवच्छिन्नशुद्धघटत्वादिप्रकारतानिरूपितविशेष्यत्वाभिन्नप्रकारतानिरूपितप्रतियोगितानिष्ठसंसर्गतानिरूपिताभावप्रकारतानिरूपितधर्मिविशेष्यता निवेश्या, न तु यः[1] प्रतियोगी यदभावे[2] प्रतियोगितया भासते स[3] एव धर्मिणि न गृह्यत इति केनाप्यनभ्युपगमात् । अवच्छिन्नत्वभानस्य तत्र सार्थक्यकथने बीजाभावात् । एवञ्च साम्प्रदायिका इत्युक्त्वा लिखितमेव सम्यगिति ।

॥ समाप्तोऽयं ग्रन्थः ॥

१ यः = घटादिः । २ यदभावे = घटाद्यभावे । ३ स एव = घटादिरेव ।

श्रीगणेशाय नमः।

# अथ लाघवगौरवरहस्यम् ॥

श्रीश्यामाशरणम् ॥

[क] अवनिपवनगन्धहेतोः... [?] सबलति स स्वयं जगदण्डपिण्डभावः।
लघुगुरुतुलनातुलाप्रकान्तु द्रुहिणगुणस्सभरं गुत्र [ण ?] त्रयस्य ॥१॥
हिरण्यगर्भस्य गुरुश्शरीरं स स्वयं लघुर्यः पुरुषः पुराणः।
अणोरणीयान् महतो महीयान् पश्यत्यचक्षुः स शृणोत्यकर्णः ॥२॥
लघुः [?] शरीरसंख्याभ्यां लोकं कल्पनया गुरुः।
अविक्रियः क्रियाः कुर्वन् द्व [?] यो मे शरणं शिवः ॥३॥
सकलाङ्कुरकारिबीजानुगतं तदकारि व्यावृत्तम्।
कुर्वद्रूपत्वं नाम सामान्यं न कलयितुमुचितम् गौरवात् ॥४॥

ननु गौरवेण गुरुवस्तुसिद्धिर्वा प्रतिबध्यते तदभावसिद्धिर्वा क्रियते ? आद्ये गौरवस्य स्वरूपसतो ज्ञायमानस्य प्रतिबन्ध [क]त्वं, प्रथमे गुरुवस्तुनो भ्रमात्मिकापि सिद्धिरनुपपन्ना। ये [?] गौरवग्रहस्य कम्बुग्रीवादिमत्त्वविशेषेण गौरवप्रकारकज्ञानत्वेन यदि प्रतिबन्धकत्वं तदा किमस्य प्रतिबध्यतावच्छेदकम् ? न तावत् कम्बुग्रीवादिमत्त्वावगाहिबुद्धित्वं वा ? निरुक्तगौरवज्ञानसत्त्वेऽपि कम्बुग्रीवादिमानिति बुद्ध्युदयात् कम्बुग्रीवादिमत्त्वधर्मितावच्छेदकत्वविशेषणकबुद्धित्वन्तथेति चेन्न, गृहीतगौरवैरपि कम्बुग्रीवादिमत्त्वे धर्मिणि विषयतासंसर्गावच्छिन्नस्य ज्ञानविशेषाभावप्रतियोगितावच्छेदकत्वस्य संसर्गतया प्रकारतया च ग्रहात्। अन्यथा कम्बुग्रीवादिमत्त्वन्नास्तीति प्रतीतिर्नोत्पद्येत घटत्वव्यधिकरणत्वतद्व्यभिचरितत्वग्रहकाले [१ख]कम्बुग्रीवादिमत्त्वं गुर्वितिज्ञानसत्त्वेऽपि तदघटितसामानाधिकरण्यघटकीभूतसंसर्गावच्छिन्नप्रतियोगितावच्छेद [क] त्वस्यापि ग्रहाच्च। ननु गौर-

वं नाम सावधि पदार्थः तथा च घटत्वावधिकगौरवप्रकारककम्बुग्रीवादिम-त्त्वविशेष्यकनिर्णयस्य या प्रतिबन्धकता तत्र सामानाधिकरण्यतुल्यकालीनत्वाभ्यां सामानाधिकरण्यमात्रेण वा घटत्वकम्बुग्रीवादिमत्त्वयोस्समनियतत्वग्रहोऽस्यवच्छेदकः तत्प्रतिबध्यतावच्छेदकस्तु येन संसर्गेण तयोः सामानाधिकरण्यग्रहः तत्संसर्गावच्छिन्नावच्छेदकताविशेषणककम्बुग्रीवादिमत्त्वधर्मिकबुद्धित्वम्, तदुभयवैशिष्ट्यावगाहिबुद्धित्वं वा तेन समवायादिना कम्बुग्रीवादिमत्त्वसमनियतं घटत्वं तदपेक्षया गुरु च, कम्बुग्रीवादिमत्त्वमिति ग्रहेऽपि विषयित्वादिसंसर्गेण कम्बुग्रीवादिमत्त्वस्य प्रतियोगित्वकारणत्वाद्यवच्छेदकत्वग्रहो नानुपपन्नः। [२क]अस्तु वा धर्मयोःसमनियतावच्छेदकत्वग्रहणमेव प्रतिबन्धकतावच्छेदकं, तेन घटत्वस्य गगनाद्यवृत्तिवृत्तितया[1] कम्बुग्रीवादिमत्त्वविषमव्यापकत्वग्रहकालेऽपि न कम्बुग्रीवादिमत्त्वेऽवच्छेदकत्वस्य ग्रहो न वा सत्तात्ववैयधिकरण्यग्रहेऽपि सत्तेतरजातित्वादौ सामान्यादिवृत्यभावप्रतियोगितावच्छेदकत्वस्य प्रत्ययः।

भवति चैवं सत्तात्वसमनियतग्रहेऽपि गुणान्यत्वविशिष्टसत्तात्वे प्रतियोगितावच्छेदकत्वबुद्धिः। अत्र च यत्संसर्गावच्छिन्नमवच्छेद्यं तदवच्छिन्नत्वेन समनियतत्वनियमो[2] निवेशनीयः, तेन सत्तेतरजातिसत्तयोस्तादात्म्यविषयत्वादिना परस्परविरोधे व्यभिचारग्रहेऽपि न क्षतिः। अत एव सत्तात्वगुणान्यत्वसत्तात्वयोस्तादात्म्यसंसर्गावच्छिन्नसमनियतावच्छेदकत्वग्रहाद् गुरुणा गुणान्यसत्तात्वस्य नान्योन्याभावप्रतियोगितावच्छेदकत्वं प्रतीयत इति चेत्, एवमन्त्यावयविभिन्नजन्यभूतत्वादौ स्पर्शत्वाद्यपेक्षया[3] गौरवप्रतिसन्धानेऽपि तत्र द्रव्यारम्भकतावच्छेदकग्रहः केन प्रतिबध्येत, नहि स्पर्शवत्त्वमन्त्यावयविभिन्नजन्यभूतत्वसमनियमावच्छेदकं घटादिवृत्तित्वात्। न च समनियमावच्छेदकत्वमपहाय लघुधर्मे व्यापकतावच्छेदकत्वग्रह एव प्रतिबन्धसहकारीति वाच्यम्, एवं सति दाहं प्रति संयोगेन कारणतायां धर्मावच्छिन्नत्वानुमाने शुद्धवह्नित्वस्यातिप्रसञ्जकत्वप्रतिसन्धानात् मण्यभावविशिष्टवह्नित्वादेरेवावच्छेदकत्ववत्तया ग्रहणप्रसङ्गः। मण्यभावत्वापेक्षया गौरवप्रतिसन्धानेऽपि ग्राह्यकारणतावच्छेदकसंयोगेन मण्यभावे तादृशवह्नि-

---

१ गगनाद्यवृत्तितयेति पाठः वि० पु० पाठः। २ समनियतत्वं निवेशनीयमिति- वि० पु० पाठः। ३ स्पर्शवत्त्वा० वि० पु० पाठः।

व्यापकत्वग्रहाभावात्, न च तादृशस्थले पृथगन्वयव्यतिरेकाभ्यां संयोगेन वह्नेः विशेषणतया मण्यभावस्य कारणताद्वयध्रौव्ये संयोगेन कारणतायां शुद्धवह्नित्वेन मण्यभावविशिष्टवह्नित्वं विशेषणतया कारणतायां[1] शुद्धमण्यभावत्वेन वह्निविशिष्टमण्यभावत्वमन्यथासिद्धम्, परस्परसहकारित्वकल्पनादेवाति प्रसङ्गभङ्गादिति वाच्यम्। एवमपि द्रव्यत्वेन दृढदण्डत्वादेरन्यथासिद्धिप्रसङ्गात्, न च तद्धर्मनिष्ठतदवच्छेदकताग्राहकसामग्रीसमवहितन्तद- [२ ख] वधिकगौरवज्ञानमेव द्वितीयधर्मे तदवच्छेदकताग्रहप्रतिबन्धकं, जलाहरणादावन्वयव्यतिरेकाभ्यां घटस्य कारणत्वग्रहे यत्र कुत्रचिदवच्छेदकताग्राहकेण सामान्यतो दृष्टेन तुल्यवदेव घटत्वकम्बुग्रीवादिमत्त्वयोरवच्छेदकत्वग्रहणसामग्र्यां विद्यमानायां घटत्वापेक्षया कम्बुग्रीवादिमत्त्वं गुरु इति प्रतिसन्धाने गुरुधर्मेऽवच्छेदकत्वग्रहप्रतिबन्धात्मिका[2] विनिगमना क्रियते, द्रव्यत्वादेस्त्वतिप्रसञ्जकत्वप्रतिसन्धानकाले घटादिकारणतावच्छेदकत्वग्राहिका सामग्री नास्तीति तदपेक्षया गुरुणोऽपि दृढदण्डत्वादेस्तदवच्छेदकत्वग्रहः। अन्त्यावयविन्यसमवायिकारणविरहादतिप्रसङ्गे प्रतिहते स्पर्शवत्त्वे द्रव्यारम्भकातिप्रसञ्जकत्वप्रतिसन्धानं नास्तीति विद्यते तत्तदवच्छेदकत्वग्राहिका सामग्री यतो गुरोरन्त्यावयविभिन्नभूतत्वस्य न द्रव्यारम्भकतावच्छेदकत्वग्रहः। एवम् सकलसामान्यादिवृत्तेरभावस्य स्वाभावविरहात्मकत्वलक्षणायाः प्रतियोगिताया अवच्छेदकताग्राहिका सामग्री सत्तात्वादौ विद्यमाना सत्तेतरजातित्वादौ गुरौ तद्ग्रहं प्रति रुणद्धीति वाच्यम्, एककार्यं प्रति गुरुणा द्वितीकार्यं प्रति च लघुना धर्मेण युगपदेव कारणत्वयोर्ग्रहणे व्यभिचारात्, एककार्यमनुमित्यादिकं प्रत्यपि लघुना परामर्शत्वेन गुरुणा च पक्षतात्वेन कारणताद्वयस्य घटादिकं प्रत्येकस्या एव कारणताया लघुना दण्डत्वेन गुरुणा दाढर्येणावच्छिन्नाया एकेन ज्ञानेन विषयीकरणाच्च।

इत्थञ्च तत्तद्धर्मे तत्कारणताव्यक्त्यवच्छेदकत्वग्राहिकया सामाग्र्या समवहितस्य तद्धर्मावधिकगौरवग्रहस्य तत्कारणताव्यक्त्यवच्छेदकत्वग्रहं प्रत्येव प्रतिबन्धकत्वमित्युक्तावपि न निस्तारः। न च यस्याः कारण-

---

१ कारणत्वे या वि० पु० पाठः। २ प्रतिबन्धका वि० पु० पाठः।

तायाः दण्डत्वमवच्छेदकं न तस्याः दार्ढ्यं किन्तु कारणत्वान्तरस्य, अत एवैकत्र नानाधर्माणां यत्र प्रवेशस्तत्रावच्छेदकभेदात् कारणताभेदः, तेषामेकतमस्य साक्षादवच्छेदकत्वमन्यतमे चावच्छेदकतावच्छेदकत्वमिति रीत्या विशेषणविशेष्यभावव्यत्यासस[1]म्भवाद् विनिगमनाविरहादवच्छेदकताभेद-सिद्धौ तद्भेदात् कारणताभेदसिद्धेरिति वाच्यं, एवं सति यत्कारणताया अवच्छेदकं घटत्वं तत्कारणतायाः कम्बुग्रीवादिमत्त्वं मा भवत्ववच्छेदकं तदितरकारणता तु कथं तेन नावच्छिद्यते कथम्वा दण्डत्वावच्छिन्नकारणता भिन्ना [३क]घटकारणता दृढदण्डत्वेन नावच्छिद्यते इति वैषम्यस्यानुपपादनात् यदि च घटवृत्तिजलाहरणकारणतायां कल्पनालाघवोपनीतमेकत्वं प्रामाणिकन्तदा दण्डवृत्तिघटकारणतायामपि लाघवादेकत्वमिति तदुपपादकं दार्ढ्यदण्डत्वयोरेकत्र द्वयन्यायेनावच्छेदकत्वमित्यपि आ[2]श्रीयते विवृतमेतत्सिद्धान्ततत्वे। किञ्च यत्र दण्डवृत्तिघटकारणतायां दण्डत्वावच्छिन्नत्वव्याप्यस्य दृढत्वावच्छिन्नत्वव्याप्यस्य च दृढत्वे दण्डत्वाधिकगौरवावगाही सन्नसन्वा परामर्शः तत्र दृढत्वदण्डत्वोभयावच्छिन्नत्वावगाहिन्यनुमितिरनुपपन्ना स्यात् न चैवं ताद्रूप्येण प्रमाणसिद्धेऽर्थे गौरवसहस्रस्याप्यकिञ्चित्करत्वात् यदि च ताद्रूप्योपस्थापकप्रमाणाभावविशिष्टगौरवग्रहस्य प्रतिबन्धकत्वसामग्री( स्वीक्रि )यते तदा कृतमनेन, प्रमाणाभावादेव गुरुधर्मावच्छिन्नत्वाऽप्रसि[3]द्धेः, । यत्तु अवच्छेदकत्वविषयतानिरूपितविषयतासंसर्गेण बुद्धौ तादात्म्येन गुरोर्धर्मस्य प्रतिबन्धकत्वमत एव कम्बुग्रीवादिमत्त्वादेः संसर्गतयापि प्रतियोगितावच्छेदकत्वन्न गृह्यते इति प्रमाण प्रबलादेव गुरुधर्मो नावच्छेदक इति तदनुभवविरोधिकल्पनादुपेक्ष्यम्।

[4]अथ द्वितीयगौरवस्य तदभावसाधकताकल्पस्तु गौरवस्य तज्ज्ञानस्य वा स्वतन्त्रतया प्रामाणत्वाभावात् कीदृशस्य प्रमाणस्य सहकारिगौरवमिति वक्तव्यम्। ननु जलाहरणसाधनताऽवच्छिन्ना, साधनतात्वादित्यनुमानेनावच्छेदकतायां निरूपकतया कथितसाधनत्वे साध्यमानायां कम्बुग्रीवादिमत्त्वं घटत्वाद् गुरुतरमिति प्रतिसन्धानसहकारात् कम्बुग्रीवादिमत्त्व-

---

१ व्याद्या वि० पु० पाठः। २ माश्रियते वि० पु० पाठः। ३ सिद्धेः वि० पु० पाठः।
४ अथ द्वितीयो गौरवस्य तदभावसाधकताकल्पः, तत्र वि० पु० पाठः।

वृत्त्यत्यन्ताभावप्रतियोगित्वं तदवृत्तित्वं वा अवच्छेदकतायां भासते, लाघवोपनीतं हि क्षितिकर्तृकत्वादिकमिव गौरवोपनीतं गुरुव्यावृत्तत्वं व्यापकतानवच्छेदकमपि साध्यविशेषणतया[1] अनुमितौ भासत इत्यभ्युपगमे विरोधाभावात् । घटत्वावच्छिन्नगौरवप्रकारतानिरूपिता या कम्बुग्रीवादिमत्त्वात्वावच्छिन्ना विशेष्यता तच्छालिनिर्णयत्वेन कारणता, कम्बुग्रीवादिमत्ताव्यावृत्तत्वप्रकारतानिरूपितविशेष्यत्वाभिन्ना याऽवच्छेद[३७]कतात्वावच्छिन्ना विधेयता तच्छाल्यनुमितित्वं कार्यतावच्छेदकम् एतत्सहकृता पक्षतापरामर्शादिघटितानुमितिसामग्री ग्राहयति साधनत्वे कम्बुग्रीवादिमत्त्वावृत्तिं तद्व्यावृत्ताम्वा अवच्छेदकताम् । न च घटत्वस्य कारणत्वातिप्रसक्तत्वग्रहकालेऽपि कम्बुग्रीवादिमत्त्वावृत्तित्वमवच्छेदकतायां कुतो न गृह्यत इति वाच्यम्, लाघवनीतघटत्वे साधनतावच्छेदकत्वग्राहिकाया अपि सामग्र्यास्तत्सहकारित्वोपगमात् । घटत्वगोचरलाघवज्ञानस्यापि घटत्वोपलक्षितव्यक्तिवृत्तित्वप्रकारतानिरूपितविशेष्यत्वाभिन्नाऽवच्छेदकनिष्ठ-विधेयताकानुमितित्वं कार्यतावच्छेदकं, तथा च घटत्वं लघु घटत्वापेक्षया कम्बुग्रीवादिमत्त्वं गुरु यत्किञ्चिदवच्छेदकतानिरूपकत्वव्याप्यवती साधनतेति त्रिसमूहालम्बनेन घटत्ववृत्तिः कम्बुग्रीवादिमत्त्वव्यावृत्ता याऽवच्छेदकता तन्निरूपिकासाधनतेत्यनुमितिरुत्पद्यते ।

न च कम्बुग्रीवादिमत्त्वव्यावृत्तघटत्ववृत्त्यवच्छेदकतात्वव्याप्यपरामर्शजनिताया अनुमितौ गौरवलाघवज्ञानयोर्व्यभिचार इति वाच्यम्, कम्बुग्रीवादिमत्त्वव्यावृत्तत्वाद्यनवच्छिन्नत्वेनाप्यवच्छेदकतावृत्ति विधेयताया विशेषणीयत्वात् । तद्धर्मावच्छिन्नव्यापकताज्ञानप्रयोज्या तु विधेयता न तद्धर्मानवच्छिन्नेति न व्यभिचारः । अस्तु वा स्वसामानाधिकरण्य-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वोभयसंसर्गेण कथितगौरवज्ञानविशिष्टबुद्धौ कम्बुग्रीवादिमत्त्वं गुर्वितिनिर्णयस्य या कारणता तयैव कारणतयोपपत्तेरतिरिक्तकार्यकारणकल्पनादोषोऽपि न भवति, तथा हि गुरुकम्बुग्रीवादिमत्त्वविशिष्टबुद्धौ कम्बुग्रीवादिमत्त्वं गुरुरिति निर्णयस्य कम्बुग्रीवादिमत्त्वावच्छेदेन गुरुत्वाभावाप्रकारकत्वे सति कम्बुग्रीवादिमत्त्वसामानाधिकरण्येन गुरु-

---

१ विधेयविशेषणतया वि० पु० पाठः

त्वप्रकारकत्वेन कुटिलकम्बुग्रीवादिमत्ता गुरु र्न वेति संशयादपि तदुपत्त्यापत्तेः। अपि तु शुद्धकम्बुग्रीवादिमत्तात्वावच्छेदेन गुरुत्वाभावाप्रकारकत्वेन न कारणत्वं, कुटिलकम्बुग्रीवादिमत्ता न गुरुः कम्बुग्रीवादिमत्ता तु गुरुर्भवत्येवेति समुच्चयादपि तादृशबुद्ध्युत्पादात् । नापि शुद्धकम्बुग्रीवादिमत्त्वत्वावच्छेदेन गुरुत्वाभावाप्रकारकत्वे सति शुद्धकम्बुग्रीवादिमत्तात्वसामानाधिकरण्येन गुरुत्वप्रकारकत्वेन, कुटिलकम्बुग्रीवादिमत्तागुरुर्न वेति संशयाद् तदुत्पत्त्यापत्तेः, अपि तु शुद्धकम्बुग्रीवादिमत्तात्वावच्छेदेन गुरुत्वाभावाप्र- [४क] कारकत्वे सति शुद्धकम्बुग्रीवादिमत्तात्वसामानाधिकरण्येन गुरुत्वप्रकारकत्वेन, तथा च कुटिलकम्बुग्रीवादिमत्तागुरुः कुटिलाभाववांश्च घट इति ज्ञानात् शुद्धकम्बुग्रीवादिमत्ताप्रकारकघटविशेष्यकविशिष्टवैशिष्ट्यबुद्ध्युत्प-[1]त्त्या तत्र व्यभिचारः। न च तादृशस्थले विशिष्टवैशिष्ट्यबुद्धिरेव नोत्पद्यत- इति देश्यं तथा सति कुटिलकम्बुग्रीवादिमत्तात्वसामानाधिकरण्येन गौरवनिर्णयघटितविशिष्टवैशिष्ट्यबुद्धिसामग्र्या इच्छाविशिष्टायास्तदितरत्र प्रतिबन्धकतायां कुटिलाभाववत्तानिर्णयाभावप्रवेशप्रसङ्गात् । अनुभवविरोधाच्च तस्मात् कारणवैशिष्ट्यमेव विशेषणतावच्छेदकप्रकारकनिर्णयजन्यतावच्छेदकम्, इत्थञ्च कम्बुग्रीवादिमत्ता गुरुरिति ज्ञानस्य विशिष्टवैशिष्ट्यबुद्धिसामग्र्यामिवावच्छेदकताघटकव्याप्यपरामर्शघटितायां कम्बुग्रीवादिमत्ताव्यावृत्तावच्छेदकत्वनिरूपकसाधनत्वानुमितिसामग्र्यामपि घटत्वमभ्युपेयते । एतेन साधनता कम्बुग्रीवादिमत्त्वव्यावृत्तभिन्नावच्छेदकतानिरूपिका न भवतीत्येतादृशेतरबाधोपनीतमपि कम्बुग्रीवादिमत्त्वव्यावृत्तत्वं विधेयतानवच्छेदकीभूय विधेयविशेषणतया भासत इत्यभ्युपेयं गौरवज्ञानतुल्यशीलत्वादितरबाधस्य, तादृशेतरबाधप्रयोज्यानुमितौ गौरवज्ञानस्य व्यभिचारः। किञ्च गौरवज्ञानादिप्रयोज्यापि विधेयता गौरवाद्युपनीतधर्मावच्छिन्नैवानुभूयते, अन्यथाऽनुमितौ गौरवाद्युपनीतधर्मविषयत्वस्यायोग्यत्वप्रसङ्गात् ।

---

१ ईदृश पु० वि० पाठः ।

अनुमितित्वावच्छिन्नविशेष्यानिरूपितविषयत्वीयस्वरूपसंसर्गाव - च्छिन्नप्रकारतासंसर्गेण मानसबुद्धौ तादात्म्येन विधेयतयाऽनुमितिविशेषणतापन्नविषयतानिरूपकत्वेन विषयता मानसे तादात्म्येनोद्देश्यताया अनुमितिविशेषणतापन्नविषयतानिष्ठप्रकारतावच्छेदकतासंसर्गेण तत्पुरुषीयमानसबुद्धौ स्वविधेयतावच्छेदकत्वसंसर्गेण तत्पुरुषीयानुमितेरनुमितिविशेषणतापन्नविषयतानिरूपकविषयतानिष्ठविशेष्यतानिरूपकविषयनिष्ठप्रकारतावच्छेदकतासंसर्गेण तत्पुरुषीयमानसबुद्धौ स्वोद्देश्यतावच्छेदकतासंसर्गेण [ ४ख ] तत्पुरुषीयानुमितेश्च पृथक् कारणताभ्युपगमस्यावश्यकतया अनुमितिनिरूपितप्रकारत्वविशेष्यत्वादेरयोग्यत्वात् , न हि पर्वतमनुमिनोमि वह्निमत्त्वेन वह्निमनुमिनोमि द्रव्ये वह्नित्वमनुमिनोमि इत्यादिकं पर्वतो वह्निमानित्यनुमातारः प्रतियन्ति, न चानुमितिप्रकारत्वविशेष्यत्वयोरयोग्यत्वे कथं तत्सिद्धिरिति वाच्यं, बाधसत्प्रतिपक्षादिप्रतिबध्यत्वान्यथानुपपत्त्या तत्र प्रकारत्वादिसिद्धिः, न हि विधेयत्वाद्यवच्छिन्नं बाधादिप्रतिबध्यं प्रतिबन्धकत्वान्तरकल्पनागौरवादाश्रयासिद्ध्यादेरदोषत्वप्रसङ्गाच्च ।

न च गौरवोपनीतधर्मप्रकारतानिरूपितविशेष्यताविधेयत्वाभिन्नैवाभ्युपेयत इति कथं न योग्या भवेदिति वाच्यं, तथापि तदनवच्छेदकतापन्नं कम्बुग्रीवादिमत्त्वव्यावृत्तत्वं कथं विधेयविशेषणत्वेन मानसप्रत्यक्षविषय इत्यनुपपत्तितादवस्थ्यात् । न च सम्भवति गवाश्वयोरिव विधेयत्वविशेष्यत्वयोरभेदः परिदृश्यमानविलक्षणव्यक्तिकल्पनागौरवदोषस्योभयत्रापि तुल्यत्वात् ; न च गौरवाद्युपनीतधर्मस्य विधेयतावच्छेदकत्वे शुद्धावच्छेदकतासिद्धिकालेऽपि गौरवग्रहसहकृताऽवच्छेदकताव्याप्यपरामर्शाद्विशिष्टानुमितिप्रसङ्ग इति चेन्न , इष्टापत्तेः , अभ्युपेयताम्वा गौरवादिप्रयोज्यानुमितौ शुद्धव्याप्यतावच्छेदकधर्मावच्छिन्नापि नियता विधेयता तथा च शुद्धसिद्धौ सत्यां व्यापकसामग्रीविरहादेव न विशिष्टानुमितिः ।

एवं सति गौरवज्ञानविशिष्टशुद्धपरामर्शघटितायास्सामग्र्या विशिष्टसिद्ध्यभावं निवेश्य भिन्नविषयकप्रत्यक्षादौ न पृथक् प्रतिबन्धकतापि कल्प्यते क्लृप्ताया शुद्धसिद्ध्यभावविशिष्टशुद्धपरामर्शघटितानुमितिसामग्रीप्रतिबन्धकतयैवोपपत्तेः , सत्यां शुद्धसिद्धौ सत्यपि गौरवादिज्ञाने भिन्नविषयक-

प्रत्यक्षादेरेवाभ्युपगमादतो गौरवज्ञानस्य कम्बुग्रीवादिमत्त्वव्यावृत्तावच्छेदकता।व्याप्यपरामर्शजनितानुमितौ व्यभिचारो भवत्यनेन लाघवज्ञानमपि व्याख्यात इति निरस्तम् कारणवैशिष्ट्यस्य कार्यतावच्छेदकत्वात्। ननु कम्बुग्रीवादिमत्त्वव्यावृत्तत्वतद्वृत्तित्वादेरनुपस्थितिकाले कथं गौरवज्ञानमुपयुज्यत इति चेत्, नोपयुज्यत एव, तथा हि यत्र साधनतापन्नः अवच्छेदकतानिरूपकतासंसर्गेण साध्यः तत्रानुमाने घटत्वकम्बुग्रीवादिमत्त्वयोरुपस्थितत्वेनावच्छेदकत्वप्रसक्तौ घटत्वं लघु ततः कम्बुग्रीवादिमत्त्वं गुर्विति ज्ञानबलात् घटत्ववृत्तित्वं कम्बुग्रीवादिमत्त्ववृत्तित्वाभावे विधेयविशेषणतया [८क] भासते अपेक्ष्यते चात्र साध्ये अवच्छेदकतायान्तत्वृत्तित्वसम्भावनं, न हि घटत्वापेक्षया गौरवपृथूलरासभत्वं गुरुतरमिति प्रतिसन्धानबलात् तादृशरासभत्वावृत्तित्वमपि जलाहरणकारणता अवच्छेदकत्वे भासत इत्यनुभूयते, नचान्यथैव निरस्ते वस्तुनि कचिदपि गौरवमुपन्यस्यन्ति तान्त्रिकाः। एवं यत्र महानसीयवह्नितदन्यसाधारणवह्नित्वावच्छिन्नसाध्यकानुमाने महानसीयस्तदितरश्च वह्निः पर्वते सम्भाव्यते तत्र गुरुर्महानसीयो वह्निर्लघुरितर इति ज्ञानाभ्यां महानसीयवह्न्यभाववान् पर्वतो महानसीयेतरवह्निमानित्यनुमितिरुत्पद्यते इत्थं पक्षीयमपि गौरवं लाघवञ्चोपयुज्यते, तथा हि घटत्वकम्बुग्रीवादिमत्त्वयोरन्यतरत्वसामानाधिकरण्येन जलाहरणकारणतावच्छेदकत्वे साध्यमाने कम्बुग्रीवादिमत्त्वं गुर्विति प्रतिसन्धानबलात् कम्बुग्रीवादिमत्तात्वावच्छेदेन साध्याभावो भासते यदि च स्वातन्त्र्येणानुमितिविषयता न प्रामाणिकी किन्तु विधेयत्वोद्देश्यत्वादिपारतन्त्र्येणैव तदा साध्ये कम्बुग्रीवादिमत्त्वव्यावृत्तत्वं भासत इत्येवाभ्युपेतव्यम्, इत्थञ्च गौरवात्तस्मिन्नभावस्य तदभावस्य वा साधकमि[ति]पक्षः सम्भवत्येवेति चेत, उच्यते स्यादपीयं प्रक्रिया यदि गौरवन्नाम कश्चिदनुगतः पदार्थः शक्येत निर्वक्तुम्, न त्वेकत्वमात्रव्यापकविधेयतापर्याप्तिर्घटत्वे लाघवं, द्वित्वसामान्यसमानाधिकरणाभावप्रतियोगिन्या विषयतायाः पर्याप्तिरिति यावत् घट इति ज्ञानीयप्रकारत्वादिस्वरूपा हि विषयता घटत्वमात्रे पर्याप्त्यैव वर्त्तते कम्बुग्रीवादिमत्त्वे पर्याप्ता तु विषयतानैकत्वव्यापिका, त्रिषु विशेषणविशेष्यसंसर्गेषु पर्याप्तत्वात् , एकत्वावच्छेदेनैकमात्रवृत्तिधर्मावच्छेदेन वा पर्याप्तभाना विषयतालाघवं द्वित्वाद्यवच्छेदेन द्वित्वादिव्यापकधर्मावच्छेदेन वा पर्याप्तविषयतागौरवमिति यावत् । ननु के[य]मभिनवा विषयता विशेषणविशेष्यसंसर्गेषु पर्याप्त्या वर्त्तते प्रत्येमपर्याप्त-

प्रकारत्वादिभ्यो भिद्यते इति चेत् सेयं विशिष्टवैशिष्ट्यगोचरज्ञानीयविशेषणविशेष्यतावच्छेदकप्रकारकज्ञानादिजन्यतावच्छेदिका विशेष्ये विशेषणं तत्र च विशेषणान्तरमात्रमवगाहमानां बुद्धिर्व्यावर्त्तयन्ती लौहित्यप्रकारतानिरूपितसमवायसंसर्गतानिरूपितवह्निविशेष्यत्वस्वरूपशृङ्खलितविषयताश्रयेषु खण्डशः प्रसिद्धेषु दैज्ञानिकविशिष्टेषु लोहितवह्न्यादिष्वपि व्यावर्त्तमानो[1] विशिष्टे न रक्तदण्डादिना पुरुषं जानामीत्यनुभवसाक्षिणी प्रकारत्वविशेष्यत्वस्वरूपाभ्यां भिन्नैवेत्यन्यदेतत् । वस्तुतस्तु प्रकारितासंसर्गावच्छिन्नप्रतियोगिताकद्वित्वावच्छिन्नाभाववज्ज्ञानप्रकारत्वं लाघवं, घटत्वादौ घट इति ज्ञाने हि प्रकारि [पृ.ख] तया न द्वयं वर्त्तते किन्तु घटत्वमात्रम्. तादृशज्ञानाप्रकारत्वं गौरवं, विशिष्टदार्थे कम्बुग्रीवादिमत्त्वादौ विद्यते, विशिष्टप्रकारके हि ज्ञाने विशेषणं च विशेषणतावच्छेदकञ्च द्वयं नियमतः प्रकारितायां वर्त्तते , अत एवाखण्डोऽप्यभावादिर्व्यक्तिजात्यपेक्षया गुरुरिति व्यपदिशन्ति स्वरूपेण जातिभिन्नपदार्थानामप्रकारत्वात् तादृशज्ञानप्रकारत्वाभावश्च यद्धर्मावच्छेदेन गृह्यते तद्धर्मविशिष्टावृत्तित्वं तद्धर्मानवच्छिन्नत्वम्वाऽवच्छेदकत्वादौ साध्ये भासते , अस्ति च तादृशज्ञानप्रकारतायाः स्वरूपेणाधिकरणे घटत्वे घटत्वत्वाद्यवच्छेदेन प्रकारताद्वयशून्यज्ञानप्रकारत्वस्याभाव इति घटत्वत्वविशिष्टावृत्तित्वं तदनवच्छिन्नत्वम्वा अवच्छेदकतायां सम्भवति स्वरूपेण प्रकारताद्वयशून्यज्ञानप्रकारता,वत्यपि घटत्वे घटत्वत्वाद्यवच्छेदेन तदभावः घटो बलवत्त्वेन न चाक्षुषविषयः किन्तु स्वरूपवत्त्वेनेत्यबाधिताऽनुभवबलात् विषयत्वस्याव्याप्यवृत्तित्वोपगमात् , अत एव तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यत्वं रजतत्वप्रकारतात्वावच्छेदेन अभ्युपगच्छन्तोऽपि प्रामाण्यत्वावच्छेदेन तदभावं तार्किकाः साधयन्ति । भवतु वा प्रकारताद्वयशून्यज्ञानत्वव्यापकत्वस्य प्रकारितासंसर्गावच्छिन्नप्रतियोगिताकाभावस्य प्रतियोगित्वमेव गौरवं स्वीक्रियताञ्च घट इति ज्ञाने घटत्वत्वावच्छिन्नस्य प्रकारितया अभावः सत्तावति गुणे गुणकर्मान्यसत्ताभावात् सा च प्रतियोगिता यद्धर्मावच्छेदेन गृह्यते तद्धर्मविशिष्टावृत्तित्वमेव सिद्ध्यत्यवच्छेदकतायाम् । अत एव घटत्वत्वविशिष्टघटत्वेनावच्छेदकताग्राहकप्रमाणप्रसरः, प्रकारिताद्वयशून्यज्ञानसामान्ये घटत्वत्वेन प्रकारिता चावच्छिन्न-

(१) बुद्ध्यादिष्वपि पर्याप्यमान वि० पु० पाठः ।

प्रतियोगिताकस्याभावस्य ग्रहणात् प्रतियोगितावच्छेदकधर्मावच्छिन्नाधिकरणतयैव सार्द्धमत्यन्ताभावस्य विरोधात। अन्यथा समवायेन सत्तावति गुणे गुणान्यत्वाभावस्य दौर्लभ्यापत्तेः, प्रतियोगितावच्छेदकसंसर्गेण प्रतियोग्यधिकरणताया गुणेऽपि सत्वात् अत एवोत्तेजकसमवधानकाले तदभावविशिष्टमण्यभावो मणिसत्यपि दाह्यवस्तुनि निराबाधः।

यत्तु विशिष्टाभावो द्विविधः एको विशेषणोपलक्षितविशेष्यस्याभावः, द्वितीयस्तु विशेषितस्य, दण्डिपुरुषो नास्तीत्येवमाकारिका एव बुद्धेर्द्वैविध्यस्यानुभवसिद्धत्वात्; अपसारितदण्डे पुरुषे प्रथमविशिष्टा- [६क] भावस्याप्रतीतेः द्वितीयस्य प्रतीतेः सर्वजनीनत्वात, तद्वैलक्षण्यञ्च न प्रकारकृतं किन्तु तदुपलक्षिताभावप्रतीतौ प्रतियोगितावच्छेदकीभूय शुद्ध एव संयोगादिः संसर्गतया भासते, तद्विशेषिताभावप्रतीतौ तु विशेषणत्वावच्छिन्ननिरूपकताक इति शुद्धसमवायेन गुणान्यत्वस्य गुणे न विद्यत एवाभावः, किन्तु गुणान्यत्वावच्छिन्ननिरूपकताकसमवायेन। न च तादृशाभावस्य शुद्धसत्तात्वमेव प्रतियोगितावच्छेदकं सम्भवतीति गुणे सत्ता नास्तीत्यपि प्रत्ययप्रसङ्गः प्रतियोगितावच्छेदकतया गृह्यमाणेनैव प्रतियोगितावच्छेदकसंसर्गनिरूपकतावच्छेदकतया भासमानेनापि धर्मेण विशेषितस्यैव प्रतियोगिनोऽभावप्रतीत्या विषयीकरणनियमात्, प्रतियोगितानवच्छेदकस्यापि प्रतियोगितावच्छेदकसंसर्गनिरूपकतावच्छेदकस्य धर्मस्य प्रतियोगिविशेषणतया भानोपगमात्, सम्भवति च तद्धर्मावच्छिन्ननिरूपकताकसंसर्गा[illegible]हिबुद्धि प्रत्येव विशेषणतावच्छेदकप्रकारकनिर्णयस्य जनकत्वं तादृशसंसर्गावगाहित्वाभावात् प्रकृते तस्यासम्भवात् लाघवेन सत्तात्वमात्रस्य संसर्गप्रतियोगितावच्छेदकत्वाविशिष्टे तद्बाधकात्, तथा च विशेषणतावच्छेदकप्रकारकज्ञानसत्त्वेऽपि बाधकसद्भावात् न तत्कार्योत्पत्तिः, तदन्यत्वस्य भासकान्तरस्य चाभावादिति भावः। तदभावादेव सदन्यसत्ता नास्तीति प्रत्ययः। अथ गुणान्यत्वविशिष्टा सत्तेति विशेषणतावच्छेदकप्रकारकनिर्णयस्य सत्त्वप्रकारतानिरूपिता या गुणान्यत्वावच्छिन्ननिरूपकत्वेनावच्छिन्ना संसर्गता तच्छालिबुद्धित्वमेव जन्यतावच्छेदकं तच्च गुणान्यसत्तावान् गुणान्यसत्ता नास्तीत्युभयसाधारणं तदैव स्याद्यदि गुणान्यत्वावच्छिन्ननिरूपक-

ताकत्वेन प्रथमे समवाय इति वद्द्वितीये प्रतियोगितासत्त्वाभावयोस्संसर्गतया भासेत, न च त्वया गुणान्यत्वस्य प्रतियोगितावच्छेदकतया भानमभ्युपेयते प्रतियोगितावच्छेदकसमवायसंसर्गस्तु न प्रकारतायाः निरूपितमिति कथं तत्साधारण्यमिति चेन्न, प्रतियोगितावच्छेदकसंसर्गतयापि प्रतियोगिप्रकारतानिरूपकत्वाभ्युपगमात्। ह्रदे वह्निर्नास्तीति बुद्धौ वह्निप्रकारतानिरूपितसंयोगसंसर्गतानिरूपितावच्छिन्नत्वसंसर्गतानिरूपितप्रतियोगित्वसंसर्गतानिरूपितनिरूपितत्वसंसर्गतानिरूपितानुयोगित्वसंसर्गतानिरूपिताभावत्वावच्छिन्नविशेष्यतात्रदुपपत्तिसिद्धा संयोगेन वह्निमान् ह्रद इति विशिष्टबुद्धिप्रतिबध्यप्रतिबन्धकतावच्छेदकता अन्यथा समवेतसंयोगस्वरूपपरम्परासम्बन्धावच्छिन्नप्रतियोगिताकाभावावगाहिबुद्धेरपि तथात्वप्रसङ्गात्। शुद्धसंयोगसंसर्गावच्छिन्नत्वावगाहित्वप्रवेशे प्रमेयसंयोगेन वह्न्यभावबुद्धेरसङ्ग्रहप्रसङ्गात्[1]। किन्तु प्रतियोगितावच्छेदकसंसर्गतायाः प्रतियोगिप्रकारतानिरूपकत्वानभ्युपगमे समवायिसंयोगस्य परम्परासम्ब-[ख]न्धमुद्रया विशिष्टसम्बन्धमुद्रया च द्वेधा प्रतियोगितावच्छेदकं तद्भेदेन द्विविधोऽभावस्तयोर्विचित्रा च प्रतीतिरित्यनुपपन्नं स्यात् उभयत्रापि प्रतियोगितायाः समवायिसंयोगावच्छिन्नत्वेनावगाहनाविशेषात्।

मम मते तु परम्परासम्बन्धस्थले समवायसंसर्गता प्रतियोगिप्रकारतानिरूपिता न त्वधिकरणसंयोगादिसंसर्गता, श्रेणीविशिष्यसंसर्गस्थले तु संयोगनिष्ठा समवायिसंयोगत्वस्वरूपविशिष्टधर्मावच्छिन्ना संसर्गता प्रतियोगिप्रकारतानिरूपितेति वैचित्र्यसम्भवात्, व्यधिकरणसंसर्गस्य प्रतियोगितावच्छेदकत्वेन संसर्गतायाः प्रतियोगिप्रकारतानिरूपकत्वेऽपि यथा न संयोगेन रूपाद्यभावप्रतीतेर्भ्रमत्वं तथा सिद्धान्ततत्त्वे व्यक्तम्। एवञ्च प्रकृते तु तदुपलक्षिताभावप्रतीतौ तदवच्छिन्ननिरूपकताकत्वेन शुद्धसमवायादिसंसर्गावच्छिन्ना प्रतियोगिता भासते, तद्विशेषिताभावप्रतीतौ तु एतदवच्छिन्ननिरूपकताकसमवायादिसंसर्गावच्छिन्नत्वेन प्रतियोगित्वे तदुपलक्षितप्रतियोगिप्रकारतानिरूपिता संसर्गता भ-

---

[1] अप्रामाण्य। वि० पु० पाठः।

वतीति विवेकात् घट इति ज्ञाने च शुद्धविषयतावच्छिन्नप्रकारताकः येन केनापि धर्मेण घटत्वस्याभावो नास्तीति मतं, तत्रापि घटत्वत्वावच्छिन्न-प्रकारतासम्बन्धावच्छिन्नप्रतियोगिताको घटत्वत्वविशेषितस्याभावः प्रकारिताद्वयशून्यज्ञानसामान्यवृत्तिरिति ज्ञानमेव घटत्वत्वविशिष्टवृत्तित्वभवच्छेद-कतायां ग्राहयेदिति दिक्।

एवं त्रिघटितस्य विशिष्टपदार्थस्य प्रकारितात्रयरहितज्ञानप्रकारत्वशू-न्यत्वमेव गौरवं तत्प्रतियोगिप्रकारत्वं चैकघटितयोर्लाघवं, लाघवन्तु घटत्वादौ किञ्चिदुपलक्षणधर्मसामानाधिकरण्येन गृह्यमाणं तथैव घटत्वादिवृत्तित्वमव-च्छेदकत्वादौ ग्राहयति।

अस्तु वा प्रकारिताद्वयशून्यज्ञानविशेष्यितानिरूपिततया प्रकार-त्ववृत्तिप्रकारताया भिन्नस्याऽवच्छिन्नस्य वा विशेष्यत्वस्य निरूपकान-वच्छिन्नघटत्वनिष्ठप्रकारताकं प्रकारताद्वयशून्यं ज्ञानं घटत्वप्रकारकमित्याका-रकं ज्ञानं घटत्वनिष्ठानिरवच्छिन्नप्रकारता निरूपितवृत्तित्वनिष्ठविषयता[७क] निरूपितावच्छेदकत्वादिनिष्ठविशेष्यताकज्ञानजनने कारणम्, समवायाति-रिक्तसंसर्गेणानवच्छिन्ना जातिर्न विशेषणी भवतीति न पुनरप्रामाणिकं रज-तत्वमिति व्यवसायानन्तरं ज्ञानविशेषणतया न रजतत्वानुव्यवसाये व्यभिचा-रि चेत्येवं शरीरगौरवलाघवेन दुर्बले, ननु तथापि किन्नाम संख्यागौरवमथ ब-हुत्वमनेकत्वम्वा तत्, तच्च यद्धर्मावच्छेदेन गृह्यते तद्धर्मविशिष्टभेदः तद्धर्मवद-वृत्तित्वम्वा विधेयधर्मे भासत इति चेत् तर्हि गन्धसमावायिकारणतायां धर्मा-वच्छिन्नत्वे साध्यमाने जातिर्बहुरिति प्रतिसन्धानवशात् धर्मे जातिभेदो अवच्छेदकतायां जात्यवृत्तित्वम्वा कथं भासेत, अत एव जातौ सदपि शरीर-लाघवज्ञानं जातित्वोपनयं प्रति कथमित्यनुषज्य च न क्षमेत। न च बहुत्वगौर-वं बहुत्ववता ततो भेदं तदवृत्तित्वं वा उपनयति, तथा च सम्बन्धसमवायिका-रणतायां धर्मावच्छिन्नत्वसाधने धर्मे बहुभेदोऽवच्छेदकतायां बहुवृत्तित्वम्वा भासत इत्यपि साम्प्रतम् एकस्यापि पदार्थान्तरमादाय बहुत्ववत्त्वेन एकवृत्तेर-पि बहुत्ववृत्तित्वेन च सर्वत्र संख्यागौरवोपनीतधर्मभानेऽप्रामाण्यप्रसङ्गात्। एको न द्वाविति तत्ता न बहुवृत्तिरिति प्रतीतिबलादेकत्वे द्वित्वाधिकरणताऽवच्छे-दकत्वस्य, तत्तायां बहुत्वावच्छिन्नाधिकरणकत्वस्याभावो विषयः यदि च ला-

वबोपनीतजातिनिष्ठावच्छेदकतायां बहुत्वावच्छिन्नाधिकरणताकत्वाभावा गौरवेणोपनीयत इति अर्थादेकजातिमात्रवृत्तित्वं सिद्धयतीत्युच्यते तदापि जातिद्वये प्रत्येकमवच्छेदकताद्वयसिद्धयापि तादृशानुमितेश्चरितार्थत्वादभिमतानिर्वाह इति चेन्न, उच्यते, प्रकारिताद्वयशून्यज्ञानप्रकारत्वाभाव एव गौरवं तच्च विशिष्टधर्मावच्छेदेन गृह्यमाणं शरीरगौरवं बहुत्वावच्छेदेन गृह्यमाणं संख्यागौरवमुभयमप्यवच्छेदकत्वादौ विशिष्टधर्मबहुत्वाद्यवच्छिन्नत्वं साधयति। न च तथापि बहूनामनवच्छिन्नावच्छेदकत्वसिद्धयाप्यनुमितिपर्यवसानादभिमतानिर्वाह इति वाच्यम्। पक्षधर्मबललभ्ये वस्तुनि यादृशबहुसत्त्वे पर्यवसितसाध्ये गौरवमुत्प्रेक्ष्यते तादृशबहुत्वावच्छेदेन[७ख]गौरवग्रहस्य तादृशबहुत्ववद्भेदोपनायकत्वात्। तथा हि क्षितिकर्त्तरि साध्यमाने लौकिककर्त्तृबाधवशादलौकिकः क्षितिकर्त्ता पर्यवसितसाध्यः,तत्र यदि कर्त्तृकर्त्र्युभयावृत्तित्वे-कर्त्रितरावृत्तित्वे वा सति लौकिककर्त्तृतदितरोभयावृत्तियद्द्वित्वं तत्समवेयात्तदा क्षितिकर्त्ता गुरुस्स्यादित्युत्प्रेक्षा सा च न स्वरूपसती हेतुरिति तत्योग्यतावाच्या सा च व्यापारकर्तृकर्त्र्युभयावृत्तिलौकिककर्तृतदितरोभयावृत्तिद्वित्ववैशिष्ट्यावच्छेदेन प्रकारिताद्वयशून्यप्रकारत्वाभावबुद्धिस्वरूपा भवति तया क्षितिकर्त्तरि तादृशद्वित्ववद्भेद उपनीयते। न हि कर्तृघटोभयत्र लौकिककर्तृभगवदुभयत्र च समवेतस्य द्वित्वस्याधिकरणे क्षितिकर्त्तरि द्वित्ववत्सामान्यभेदो भवितुमर्हति तादृशद्वित्वञ्च जीवात्मसु प्रसिद्धम्। एवं गन्धसमवायिकारणतायां धर्मावच्छिन्नत्वानुमाने प्रसिद्धजात्यवच्छिन्नत्वे बाधात् जातौ च लाघवप्रतिसन्धानात् प्रसिद्धजातीतरजात्यवच्छिन्नत्वं पर्यवसितं साध्यम्, तत्र यदि जातितदितरोभयावृत्तिप्रसिद्धजातितदितरोभयावृत्तिद्वित्वं समवेयात्तदा तादृशजातिगुरुः स्यादित्युत्प्रेक्षा वा योग्यता, तादृशद्वित्वविशिष्टे गौरवप्रतिसन्धानस्वरूपा तद्बलात् तदुपलक्षिततादृशद्वित्ववद्भेदो विधेयजातौ भासते, पृथिवीत्वगन्धवत्त्वोभयवर्त्तिद्वित्वं जातितदितरोभयत्र पृथिवीत्वद्रव्यत्वोभयवर्त्तिद्वित्वं प्रसिद्धजातितदितरोभयत्र वर्त्तत इति न तादृशद्वित्वमादाय बाधः। एवं गौरिति प्रतीतौ विशेषणविशेष्यसंसर्गनिमित्तकत्वे साध्ये संयोगादिविषयकत्वे बाधात्, संयोगादीतरसंसर्गनिमित्तकत्वं पर्यवसितं साध्यं, तत्र संसर्गतदितरोभयावृत्तिसंयोगादितदितरोभयावृत्तिद्वित्ववद्भेदो विधेयसंसर्गे भासते, समवायघटोभयवृत्तिद्वित्वं संसर्गतादितरोभयावर्त्ति, संयोगसमवायोभयत्वञ्च न संयोगतदितरोभयावर्त्तीतिसमवायैक्यमर्थसिद्धं,

यदि हि समवायद्वयं स्यात्तदा तदुभयत्वमादाय समवाये तद्भेदे बाध एव स्यात् । इत्थञ्च व्यापकतावच्छेदकतया गृह्यमाणो यो धर्मस्तद्वत्तदितरोभयावृत्तिवत्तदितरोभयावृत्तिद्वित्वं वा यदितरबाधोपमेयधर्मवत्तदितरोभयावृत्तिद्वित्वन्तदवच्छेदेन गृह्यमाणं गौरवं तादृशद्वित्ववद्भेदं विधेये तदविशेषणे वा धर्मे ग्राहयतीति सामान्यव्युत्पत्तिः इतरमपि यत्र प्रसिद्धानां यावतामितर बाधादिना प्रतिक्षेपादप्रसिद्धमादायैव साध्यस्य पर्यवसानं तादृशस्थल एव निरुक्तद्वित्ववद्भेदोपनायकमत एव घटादिकर्त्तरि लौकिके न [नक] तादृशद्वित्ववद्भेदोपनयः ।

अत एव समवेतत्वबाधसहकृतेन शब्दो द्रव्यसमवेतो गुणत्वादित्यनुमानो सिद्धयति । मूर्त्तेतरद्रव्यमूर्त्ततदितरयोर्द्रव्यतदितरयोरवर्त्तमानस्य द्वित्वस्यानधिकरणत्वन्नोपनीयते, प्रसिद्धविभूनामप्रतिक्षेपेणान प्रसिद्धमेवादाय पर्यवसानसम्भवात् ।

अन्यथा गगनेऽपि व्योमात्मद्वित्वादेस्तादृशस्य सत्त्वेन निरुक्तानुमानस्याप्रामाण्यप्रसङ्गात, परन्तु तादृशस्थले प्राथमिकानुमानेन गृहीते शब्दसमवायिनि द्रव्यशब्दसमवायितदितरोभयापर्याप्तद्वित्वावच्छेदेन गौरवमुपेद्यते ततो विभुसमवेतत्वव्याप्य मूर्त्तेतरद्रव्यसमवेतत्ववत्ताथाः शब्दपरामर्शः ततो विभौ शब्दसमवायितदितरोभयावृत्तिद्वित्ववद्भेदावगाहनानुमितिरितिक्रमादेकमात्रसमवेतत्वसिद्धिः. तादृशद्वित्वञ्च शब्दसमवायितदितरमात्रवृत्तिघटादौ प्रसिद्धम् ।

हन्तैवमात्माद्येकत्तरसमवेतत्वसिद्धावपि प्रकृतानुमानपर्यवसानादाकाशन्न सिद्धयेदिति चेन्न, शब्दो न विभुद्वयसमवेतः शब्दसमवायितदितरोभयासमवेतद्वित्ववद्भिन्नसमवेतत्वात । नापि चैत्रमात्रसमवेतः चैत्रेतरसमवेतत्वग्राहकप्रमाणगोचरत्वादित्यादिपरिशेषान्तरेण विभ्वन्तरसमवेतत्वबाधे प्रसिद्धविभुभिन्नविभुसमवेतत्वसिद्धिसम्भवात । यथा च न भगवदेकसमवेताः शब्दास्तथा सिद्धान्ततत्त्वे प्रपञ्चितम । प्राच्यास्तु बहुत्वमेव गौरवं तच्च पर्यवसितविधेयतावच्छेदकविशिष्टयद्धर्मावच्छेदेन गृह्यते तद्धर्मविशिष्टभेदमसति बाधके विधेयविशेषणतया बोधयति.तथा च शब्दसमवायिद्रव्यसाधकानुमाने मूर्त्तसमवेतत्वबाधवशात् मूर्त्तेतरद्रव्यमेव पर्यवसितं विधेयता

वच्छेदकं विशिष्टप्रसिद्धविभुत्वावच्छेदेन गौरवं प्रतिसंहितमिति प्रसिद्धविभु-भेदो मूर्त्तेतरद्रव्यविशेषणतया भासते विभुसामान्यभेदस्तु बाधवशादेव न साधयितुं शक्यते,शुद्धभूतत्वावच्छेदेन विद्यमानमपि बहुत्वगौरवं न भूतभे-दमाकाशे ग्राहयति । मूर्त्तेतरद्रव्यत्वस्वरूपपर्यवसितविधेयतावच्छेदकावि-शिष्टभूतत्वाधिकरणत्वस्य पूर्वमसिद्धतया तत्र बहुत्वगौरवाग्रहाभावादेवं ग-न्धसमवायिकारणताधर्मावच्छिन्नत्वव्याप्यवती प्रसिद्धजातिभिरनवच्छि-न्ना च प्रसिद्धजातीतरधर्मत्वविशिष्टा च उपधेयो बहवः जातिशरीरत्तो लघु-रिति चतुरसमूहालम्बनादुपाधिभिन्नजात्यभिन्नप्रसिद्धजातीतरधर्मावच्छि-न्नत्वानुमितिर्न वा बाधेऽप्यत्र इत्याहुः ।

[८ख] एवं सुकरं शरीरसङ्ख्यागौरवनिर्वचनमिति । उच्यते, अस्तु तावदेवं सुवचं शरीरगौरवादिः, कल्पनागौरवन्तु कथं तदभावं साधयेत्, नहि-कुर्वद्रूपत्वं कल्पना गुर्वीति प्रतिसन्धीयते धर्मिण एवाऽप्रसिद्धेः । न च कल्प-नागौरवन्नाम कश्चिदनुगतपदार्थो निर्वक्तुं शक्यत इति पूर्वपक्षः । राद्धा-न्तस्तु , पर्यवसितविधेयतावच्छेदकप्रकारककल्पनाविषयत्वमेव लाघवं. तच्च यद्धर्मावच्छेदेन गृह्यते तं विधेयविशेषणतया ग्राहयति, तथा हि बीजमती-न्द्रियजातितदभावान्यतरवद्वीजत्वेतराङ्कुरजनकतावच्छेदकजातितदभावान्य-तरवद्वा मेयत्वमस्त्वासत्त्वाद्वेति सामान्यतो दृष्टावतारे क्लृप्ततादृशजाती-नां गुरुत्वत्वधरणित्वादीनां बीजे बाधवशात्क्लृप्ततादृशजातिभिन्ननिरुक्तान्य-तरत्वावच्छिन्नविधेयताकानुमितिरुत्पत्तुमर्हति सा च तादृशजात्यभावत्वा-वच्छेदेन निरुक्तविधेयतावच्छेदकप्रकारकल्पनाविषयत्वस्वरूपलाघवप्रति-सन्धानवशाद्विधेये तादृशजात्यभावत्वमपिअवगाहते, जातेस्तु प्रसिद्धजातीतर तादृशान्यतरत्वेन क्वापि कल्पना न गृहीतेति न जात्यभेदसिद्धिः। नन्वितरबा-धोपनीतधर्मविशिष्टव्यापकावच्छेदकधर्मावच्छिन्नविधेयताकानुमितौ जायमा-नायां शुद्धेन व्यापकतावच्छेदकधर्मेण तद्विधेयान्तरमवच्छिद्यते न वा आद्ये सामान्येन बाधितमपि साधयेदनुमितिस्तथा च तद्विधेयतावच्छेदकधर्माव-लीढत्वादितरस्माद्व्यावृत्तं लाधवं तद्धर्मावच्छेदेन प्रतिसन्धीयते स एव धर्मो-विधेयविशेषणतया भासत इति व्युत्पत्तेर्निरुक्तान्यतरत्र जात्यभाववत्त्वं कथं भासते, न हि क्लृप्तलाघवं तदनुमितिविधेयतावच्छेदकनिरुक्तान्यतरत्वावली-ढायाः गुरुत्वत्वादिजातेर्व्यावृत्तं सन्निरुक्तजात्यभावत्वावच्छेदेनावसिष्ठते ,

कथमन्यथा वह्नित्वावच्छिन्नव्यापकतावगाहिपरामर्शाज्जनितायामनुमितौ तार्णत्वादिकल्पनालाघवोपनीतो न भासते, तार्णोऽपि क्लृप्त इति प्रतिसन्धानसम्भवात्। द्वितीये त्वितरबाधस्यैव शुद्धव्यापकतावच्छेदकधर्मावच्छिन्नविधेयताकानुमितौ प्रतिबन्धकत्वमभ्युपगम्यमित्यपूर्वकल्पनं. विद्यते हि तत्र शुद्धसाध्यानुमितिप्रयोजिका पक्षता, किञ्चासतीतरबाधे शुद्धसिद्धौ च भिन्नविषयकप्रत्यक्षादेरनुत्पादप्रसङ्गः, तत्रेष्टापत्तावितरबाधविशिष्टशुद्धपरामर्शविशिष्टसिद्ध्यभावादिघटितायाः सामग्र्याः भिन्नविषयकप्रत्यक्षादौ प्रतिबन्धकताधि-[६क]क्यमन्यथा शुद्धपरामर्शस्य शुद्धसिद्ध्यभावविशिष्टत्वेन प्रतिबन्धकतया तदभावेन भिन्नविषयकप्रत्यक्षोत्पत्तौ बाधकाभावादिति चेत्, मैवं यथा ह्यस्तु समूहालम्बनात्मकपरामर्शजन्यानुमितिवदितरबाधजन्यानुमितिरपि विधेयताद्वयशालिनी तथापि तद्धर्मावच्छिन्नविधेयताकानुमितिसामग्रीसहकृतं तदवान्तरधर्मावच्छेदेन लाघवज्ञानं तदवान्तरधर्मरहिते तद्विधेयतावच्छेदकधर्मवति लाघवज्ञानाभावं सहकारिणमासाद्यावान्तरधर्मं विधेयविशेषणतया ग्राहयति इति परिभाषा न विरुध्यते, विद्यते हि प्रकृते प्रसिद्धतादृशजातीतरनिरुक्तान्यतरत्वावच्छिन्नानुमितेरितरबाधघटिता सामग्री विधेयतावच्छेदकावान्तरधर्मस्य तादृशजात्यभावत्वस्याधिकरणे क्लृप्तत्वलाघवज्ञानं तादृशजात्यभावभिन्नप्रसिद्धतादृशजातीतरनिरुक्तान्यतरत्वावच्छेदेन क्लृप्तत्वलाघवप्रतिसन्धानाभावश्चेति प्रसिद्धतादृशजातीतरवत् तादृशजात्यभाववच्च यद्बीजत्वान्याङ्कुरजनकतावच्छेदकजातितदभावान्यतरवत् तत्तद्बीजमित्यनुमितिरुत्पद्यमाना प्रतिरुणद्धि कुर्वद्रूपत्वसिद्धिम्। वस्तुतस्तु प्रकृते क्लृप्तजातीतरत्वविशिष्टं यत्तादृशान्यतरत्वं तदेव पर्यवसितं विधेयतावच्छेदकं तत्प्रकारकं कल्पनाविषयत्वञ्च कुत्रापि तादृशजात्यभावे जात्यभावभिन्ने गुरुत्वादिजातौ न गृहीतं यच्च शुद्धसाध्यतावच्छेदकप्रकारककल्पनाविषयत्वं तत्तादृशजातितदभावोभयसाध्येऽन्येन गृहीतं न विनिगमकम्। ननु तथापि कल्पनालाघवमिव जातित्वावच्छेदेन शरीरलाघवं प्रतिसंहितमिति जात्यभेदो विधेयधर्मे भासत इत्यविनिगम एव वर्तते।

अथ जातित्वावच्छेदेन शरीरलाघवमिव पर्यवसितविधेयतावच्छेदकप्रकारककल्पनाविषयत्वाभावस्वरूपं गौरवमपि प्रतिसंहितमिति तद्भेदभासकसामग्रीसमाजान्न तदभेदो भासत इति चेत्, एवं सति तादृशजात्यभावे कल्पनालाघवमिव शरीरगौरवमपि प्रतिसंहितमिति तद्भेदभासकसत्त्वात्तदभेदोऽपि

मा भासिष्टेति, मैवं शरीर लाघवस्यावच्छेदकत्वादिविशेषणतयैव लघुधर्मोपनायकत्वात्'सम्भवति लघौ गुरौ यान्यवच्छेदकत्वादीनि नाभ्युपेयते येषु एव लाघवशरीरस्य विनिगमकत्वात् एकत्र धर्मिणि शरीरतो गुरु (९ख) लघ्वोरुभयोरपि समावेशदर्शनात्, धर्मिणि धर्मसंसर्गानुमाने शरीरलाघवस्याकिञ्चित्करत्वात्, कल्पनालाघवन्तु परस्परविरोधिनामेकतमसिद्धौ विनिगमकं, विद्यते च प्रकृते एकत्र धर्मिणि बीजे तादृशजातितदभावयोरेकस्यामवच्छेदकतायाञ्च द्वयोर्धर्मयोः समावेशासम्भवादेकतरमात्रपरिकल्पने विनिगमकचिन्तायां कल्पनालाघवस्योपयोगः। अत एव सिद्धबीजत्वजात्यैवाङ्कुरकारणत्वावच्छेदेन शरीरगुरुणा शाल्याद्यन्यतमत्वेन न वा कल्पनागुरुणा कुर्वद्रूपत्वेन, नन्वेवमपि कारणत्वावच्छेदकत्वेनापूर्वजातिसिद्धिरिति प्रामाणिकानां प्रवादः, कथमुपपद्येत। तथा हि स्पन्दत्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपकतया धर्मवृत्त्यवच्छेदकता भवति[1] कारणतात्वादिति सामान्यतो दृष्टावतारे प्रसिद्धजातीनां गुणत्वपृथवीत्वद्रव्यत्वादीनाम विरोधव्यतिरेकव्यभिचारान्वयव्यभिचारप्रयोजकत्वप्रतिसन्धानात् प्रसिद्धजात्यनवच्छिन्नत्वे सिद्धे प्रसिद्धजातीतरधर्मावच्छिन्नत्वानुमिनिर्जीयमाना जातौ[2] प्रकारिताद्वयरहितज्ञानप्रकारत्वस्वरूपशरीरलाघवमवच्छिन्नपरिमाणवत्त्वादौ तद्विपरीतं गौरवमवगा[illegible] ज्ञानस्य बलादवच्छेदकताविशेषणतया अवच्छिन्नपरिमाणावृत्तित्वं जातिवृत्तित्वञ्चावगाहते।

अथ वा विधेयविशेषणधर्मे जात्यभेदमवच्छिन्नपरिमाणवत्त्वभेदञ्च विषयीकरोति तन्नानुपपन्नं तथा हि प्रसिद्धजात्यवच्छिन्नत्वबाधवशात् प्रसिद्धजातीतरधर्मत्वेनावच्छिद्यमानायां विधेयतावच्छेदकतायां तदवच्छेदकविशिष्टा तदवच्छिन्नपरिमाणवत्त्वे तस्माद्वयावर्तमानं क्लृप्तत्वलघवमवच्छिन्नपरिमाणवत्त्वे गृहीतमनुसंहितञ्च। जातयो न प्रसिद्धाः प्रसिद्धजातीतरत्वेन क्लृप्ता सा इति गौरवबलवतो जात्यवृत्तित्वमवच्छिन्न परिमाणवत्त्ववृत्तित्वञ्च भासतामथ वा धर्मे जातिभिन्न (१०क) त्वावच्छिन्नपरिमाणवत्त्वाभिन्नत्वे सिद्ध्येतामिति सत्प्रतिपक्षे वा कथं विनिगमकः। नहि तयोर्गौरवघटितसामाग्र्योरन्यतरस्य बलाबलमनुपश्याम[3] इति चेत्, अत्राहुः, कल्पनागौरवग्रहः स्वधर्मितावच्छेदका-

---

१ वतीति, वि० पु० पा०। २ जात्य, वि० पु० पा०। ३ मनुपगमे, वि० पु० पा०।

वच्छिन्नभेदमुपनायतीत्यत्र प्रमाणाभावः, पर्यवसितसाध्यतावच्छेदकप्रकारक कल्पनासामान्याभावस्य योग्यायोग्यप्रतियोगिकत्वेनायोग्यतया दुर्ग्रहत्वात्, अन्ततो अन्यथाख्यातिस्वरूपाया अपि तादृशकल्पनायास्सर्वत्र सम्भवेन बाधितत्वाच्च, अतो जातिभेदादिग्राहकाभावान्निराबाधेन शरीरलाघवेन जात्यभेदादिरुपनीयते, अवच्छिन्नपरिमाणवत्त्वादिभेदग्राहकेण शरीरगौरवेणास्कन्दितन्तु कल्पनालाघवं सदपि तदभेदन्न साधयति, सम्भवति च तत्कारणत्वावच्छेदकधर्मे शरीरलाघवोपनीतजात्यभेदग्राहकसामग्री समवहितस्यावच्छिन्नपरिमाणवत्त्वे शरीरगौरवग्रहस्य तादात्म्यसम्बन्धावच्छिन्नं यदवच्छिन्नपरिमाणवत्त्ववृत्तिप्रकारत्वं तन्निरूपितविशेष्यत्वेनाभिन्नमवच्छिन्नम्वा यद्धर्मनिष्ठमवच्छिन्नपरिमाणवत्त्वतादात्म्यानवच्छिन्नमवच्छेदकत्वं तन्निरूपितावच्छेदकत्वविधेयतानिरूपितकारणत्वोद्देश्यताकानुमितित्वं प्रतिबध्यतावच्छेदकं यदत्र पुनरवच्छिन्नपरिमाणवत्त्वाभिन्नधर्मावच्छिन्नत्वव्याप्यवत्तायाः परामर्शस्तत्र धर्मनिष्ठाविधेयतावच्छेदकत्वावच्छिन्नपरिमाणवत्त्वतादात्म्यावच्छिन्ना न तु यत्र लाघवोपनीतस्स धर्मस्तत्रापि तदवच्छेदकलाघवोपनीतधर्माविषयत्वन्तु ज्ञानत्वावच्छेदेन गृह्यतेऽनुव्यवसायेन न त्वनुमितित्वावच्छेदेन। अत एव लाघवोपनीतधर्मगोचरानुमितिर्मानसम्वेत्यत्र विवदन्ते, अन्यथा प्रत्यक्षप्रमाणसिद्धेऽनुमितेर्लघु[1]धर्मोपहितविधेयविषयत्वे विवादासम्भवात्, कल्पनागौरवग्रहस्तु गुरुभेदोपनायको न वा तदभेदग्रहे प्रतिबन्धक इति। वस्तुतः क्लृप्तत्वलाघवमुपाध्यन्तराद्व्यावृत्तं सदवच्छिन्नपरिमाणवत्त्वेनावतिष्ठते अन्ततः पृथिव्याद्यन्यतमत्वादेरेव क्लृप्तस्य तादृ [१०ख] शोपाधेस्सम्भवात्, यदि च शरीरगौरवातिशयवशात् पृथिव्याद्यन्यतमत्वभेदोऽपि धर्मे विशेषणीभूय भासते इति तादृशविशिष्टविधेयतावच्छेदकावलीढान्तराव्यावृत्तमिदं क्लृप्तत्वलाघवज्ञानमित्युच्यते, तदा तदभिप्रेत्यैव मूर्तत्वजातिं नानुमन्यन्ते तान्त्रिकाः जातौ शरीरलाघवस्योपाधौ कल्पनालाघवस्य च तुल्यब (ल) त्वात्, शरीरतः कल्पनातश्च लघुना द्रव्यत्वेनैव स्पन्दसमवायिकारणतावच्छेदात्, गगनादौ स्पन्दोत्पत्तिप्रसङ्गस्य कारणान्तराभावेनैव निराशात्, कारणतावच्छेदकतया तत्रैव जातिसिद्धिः यत्र तु तुल्यशरीराणां समनीयतानामनतिप्रसञ्जकानां बहूनामुपाधीनामवच्छेदकत्वसम्भवात् क्लृप्तत्वलाघवमितरविधेयतावच्छेदकावलीढाव्यावृत्तमेकतममात्रे नावतिष्ठते,

---

१ लाघवोपनीतधर्मविशिष्टा, वि० पु० पा०।

यथा गन्धसमवायिकारणत्वानतिप्रसञ्जकानामुपाधीनान्ताबद्भिन्नभिन्नत्वतावद्-वृत्तिशून्यत्वादीनान्नैकतमसात्रे क्लृप्तत्वलाघवमवतिष्ठत इति शरीरलाघवात् पृथवीत्वजातिसिद्धिः।

ननु तत्रापि गन्धसमवायिकारणताप्रसिद्धजातिभिन्नेनवच्छिन्नेति बाधवशात् प्रसिद्धजातिभिन्नधर्मावच्छिन्नत्वग्राहकेण प्रमाणेन नाना विधाऽ-पोहसाधारणापोहत्वावच्छेदेनापोहेतरप्रसिद्धजातिभिन्नानतिप्रसञ्जकधर्मव्यावृत्त-कल्पनालाघवप्रतिसन्धानसहकारेणावच्छेदकतायामपोहवृत्तित्वं धर्मे बाऽपोहा-भेदः कथं न भासते इति चेन् कथं न भासेत यद्यपोहत्वावच्छेदेन क्लृप्तत्व-लाघवमिव बहुत्वगौरवमपि प्रतिसंहितं स्यात् तत्प्रतिसन्धाने तु लाघवेन तदभेद इव गौरवेण तद्भेदः साधनीय इत्यपि विनिगम एवावर्त्तते अथ जातित्वावच्छेदे-नापि शरीरलाघवमिव बहुत्वगौरवमपि प्रतिसंहितमिति चेत्, पर्यवसितविधेय-तावच्छेदकधर्मविशिष्टयद्धर्मावच्छेदेन बहुत्वगौरवप्रतिसन्धानं तदवच्छेदेन तद्भेदतद्वृत्तित्वादय एव विधेयविशेषणतया भासन्ते, जातौ तु प्रसिद्धजाति-भिन्नधर्मत्वादिर्यदितरबाधवशात् पर्यवसितविधेयतावच्छेदकं तद्विशिष्टजाति-[११क] त्वावच्छेदेन बहुत्वगौरवज्ञानन्नास्तीति कथं धर्मे जातिभिन्नत्वमवच्छेदक-तायां जातिवृत्तित्वम्वा भासेत, अपोहेषु तु प्रसिद्धजातिभिन्नधर्मत्वविशिष्टापोह-त्वावच्छेदेन बहुत्वं गृहीतमिति महत् वैषम्यं तस्मादतीन्द्रियजात्यभावत्वावच्छे-देन प्रसिद्धजातिभिन्नतादृशजातितदभावान्यतरत्वप्रकारककल्पनाविधेयत्वमेव लाघवं तथातीन्द्रियजात्यभावस्तादृशान्यतरत्ववानिति व्यवसायस्य प्रत्यक्षेणा-ऽहमतीन्द्रियजात्यभावं तादृशान्यतरत्वेन जानामीत्यनुव्यवसायाकार इति स्पष्टमुपरिष्टात्।

वस्तुतस्तु तादृशजात्यभावत्वसामानाधिकरण्येन पर्यवसितसाध्य-तावच्छेदकप्रसिद्धजातिभिन्ननिरुक्तान्यतरत्वप्रकारकोपस्थितिः स्वरूपसत्येव तादृशजात्यभावत्वस्योपनायकम्, कल्पनालाघवं न तु तत्तदनुव्यवसायेन तदुत्थाप्य ज्ञानान्तरेण वा ज्ञाता सत्युपयुज्यते गौरवात्, कल्पनागौरवं स्वरूपसन्नेव जाति-त्वावच्छेदेन पर्यवसितसाध्यतावच्छेदकप्रकारकोपस्थितेरभावः कल्पनालाघ-वेन फलजननेन सहकारी. एवञ्च यद्धर्मसामानाधिकरण्येन पर्यवसितसाध्यता-वच्छेदकप्रकारकोपस्थितिर्विद्यते न विद्यते तद्विरुद्धधर्मावच्छेदेन स धर्मो विधेय-विशेषणतया फलीभूतानुमितौ विषय इति सामान्यव्युत्पत्तिः। न त्वेवं वह्न्यादि

साध्यकस्थले पर्वतीयेतरत्वसामानाधिकरण्येन वह्नित्वप्रकारकोपस्थितौ सत्या-
मसत्याञ्च पर्वतीयत्वाद्यवच्छेदेन पर्वतः पर्वतीयेतरवह्निमानित्यनुमितिः
स्यादिति चेत् कथं न स्याद्यदि बाधो न विरुणद्धि अत एव क्षितिपक्षकानुमानेन
कर्त्तरि सिद्धेः द्व्यणुकपक्षकानुमाने साध्यमाने क्षितिकर्तृत्वावच्छेदेन कर्तृत्व-
प्रकारकोपस्थितिबलात् क्षितिकर्तृकर्तृकं द्व्यणुकमिति जायमानानुमितिविधेय-
विशेषणतया व्यापकतानवच्छेदकमपि क्षितिकर्तृकत्वमपि गृह्णाति कुलालत्वन्तु
द्व्यणुककर्त्तरि बाधादेव न सिद्ध्यति। परमार्थतस्तु पर्यवसितविधेयता-
वच्छेदकावच्छेदेन यो धर्मो गृहीतः स धर्मस्तेनैव कल्पनालाघवेन
स्वरूपतोपनीतो विधेयविशेषणतया भासते द्व्यणुकादिपक्षककर्तृत्वानुमाने
च लौकिकस्य कर्तुर्बाधेऽलौकिककर्तृत्वमेव पर्यवसितं विधेय-
तावच्छेदकं तदवच्छेदेन च क्षिति (११ख] कर्तृत्वं गृहीतमिति क्षितिकर्तृत्व-
वदलौकिककर्तृकं द्व्यणुकमित्यनुमितिरुपपद्यते, तत्र चालौकिककर्त्ता क्षितिकर्त्तेति
कल्पना, विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनावश्यक्लृप्तकारणाभावात्
कर्तृव्याप्यवत्तापरामर्शेन लौकिककर्तृबाधघटितानुमितिसामग्र्याऽभिविशते
अलौकिककर्त्तरि क्षितिकर्तृभिन्नत्वप्रकारककल्पनाविषयत्वाभावस्वरूपं गौरवन्तु
स्वरूपसदेव कल्पनालाघवोपक्षीणमलौकिककर्तृत्वसामानाधिकरण्येन क्षित-
कर्तृभेदकल्पनायां सत्यामलौकिककर्तृत्वावच्छेदेन क्षितिकर्तृतादात्म्यादेर्ग्रह-
णायोगात्, एवञ्च प्रकृते प्रसिद्धजातीतरनिरुक्तान्यतरत्वावच्छेदेन तादृश-
जात्यभावत्वस्य ग्रहात्तादृशजात्यभावत्ववत् प्रसिद्धजातीतरनिरुक्तान्यतरत्व-
विशिष्टविधेयकानुमितिर्जायमाना प्रतिरुणद्धि, कुर्वद्रूपत्वसिद्धिं कल्पनालाघवेन
तत्तद्धर्मस्योपनये जायमाने तत्र धर्मे गौरवान्तरग्रहाभावोऽपि सहकारीति प्रति-
पादितं प्राक्। तेन गन्धसमवायिकारणतावच्छेदकता निरूपकत्वसंसर्गेण
धर्मवती अवच्छेद्यत्वादित्यनुमानेन प्रसिद्धजात्यवच्छेद्यत्वबाधे व्यभिचारित-
धर्मावच्छेद्यत्वबाधे च सति प्रसिद्धजातीतराव्यभिचरितधर्मत्वस्वरूपं यद्वि-
धेयतावच्छेदकं तदवच्छेदेन तावदपोहान्यतमत्वनिर्णये सत्यपि न तावदपो-
हान्यतमावच्छिन्नत्वं सिद्ध्यति तावदन्यतमत्वावच्छेदेन बहुगौरवग्रहात्।
नन्वेवं वह्नित्वाद्यवच्छेदेन गृह्यमाणः प्रमेयत्वादिरपि वह्न्यादिसाध्यकानुमिता-
वुपनीतेन कथं न भासत इति चेत् उच्यते यद्धर्मावच्छेदेन व्यापकताग्रहस्तद्धर्म-
सामानाधिकरण्येन यदभावो गृहीतस्स एव धर्मो विधेयविशेषणतया भासते,
...ऽभेदस्त्वादि तथा, भवति च कर्तृत्वव्याप्यकार्यत्ववद् द्व्यणुकमिति परामर्शे

कर्तृत्वसामानाधिकरण्येन क्षितिकर्तृत्वाभावग्रहे च सति सति च लौकिकस्य कर्त्तृबाधे पर्यवसितविधेयतावच्छेदकीभूतलौकिकान्यकर्तृत्वावच्छेदेन क्षितिकर्तृत्वाऽवगमे क्षितिकर्तृत्ववल्लौकिकान्यकर्तृत्वं द्व्यणुकमित्यनुमितिः। ननु वह्निव्याप्यधूमवानिति परामर्शसमकालमेव यत्र महानसीयवह्निव्याप्यवत्तापरामर्शो महानसीयवह्नित्वावच्छेदेन व्यञ्जनपचनत्वस्य शुद्धवह्नित्वसामानाधिकरण्येन तदभाववत्त्वस्य च ग्रहः, तत्र च कल्पनालाघवोपनीतस्य व्यञ्जनपचनत्वविशिष्टमहानसीयवह्न्यनुमितिः, कथञ्च जायते जायते च वह्निव्याप्यधूमवानिति परामर्शकाले महानसीये (१२क) तरवह्निबाधे महानसीयवह्नित्वावच्छेदेन व्यञ्जनपचनत्वस्य निर्णये व्यञ्जनपचनमहानसीयवह्निमानित्यनुमितिरिति चेन्न, महानसीयेवह्निर्व्यञ्जनपचनमिति लाघवनिर्णयस्य शुद्धवह्निव्याप्यवत्तापरामर्शमहानसीयेतरवह्निबाधघटितयामेव सामग्र्यां घटकत्वं न तु महानसीयवह्निव्याप्यवत्तापरामर्शघटितायामित्यभ्युपगमात्, शुद्धसाध्यतावच्छेदकसामानाधिकरण्येनोपनेयधर्माभाववत्ताग्रहस्य तु सन्देहसाधारणस्य तादृशानुमितिजनकत्वं स्वातन्त्र्येणैव।

यद्वा वह्निर्न व्यञ्जनपचनमिति शाब्दबुद्धौ तादृशयोग्यताज्ञानस्य कारणता तन्निरूपितजन्यतावच्छेदककुक्षौ कारणत्ववैशिष्ट्यमवश्यनिवेशनीयमन्यथा वह्नौ व्यञ्जनपचनत्वाभावं व्यञ्जनपचनत्वाभावे वह्निवृत्तित्वं व्यञ्जनपचनत्वे वह्निवृत्त्यभावप्रतियोगित्वं चावगाहमानानां ज्ञानानां परस्परव्यभिचारेणाकारणत्वप्रसङ्गात्।

एवञ्च जन्यतावच्छेदककुक्षौ शाब्दत्वप्रवेशे मानाभावात् तथैव कारणताया निर्वाहः। नच तावद्योग्यताज्ञानसाधारणमनुगतं व्यञ्जनपचनत्वाभावयोः प्रतियोग्यनुयोगिकाभावस्याभावाधिकरणयोश्चाधाराधेयभावस्यावगाहित्वं सम्भवीति वाच्यम्। व्यञ्जनपचनत्वाभावो वह्निमानित्यादिबुद्धावतिप्रसङ्गात्, प्रकारभेदादननुगताबामप्रामाण्यनिर्णयानां प्रत्येकाभावस्य तत्प्रकारकबुद्धित्वेन कारणे ज्ञाने प्रवेशौचित्याच्च। अन्यथा व्यञ्जनपचनत्वाभावप्रकारकत्वघटिताप्रामाण्यनिर्णयकाले वह्निर्न व्यञ्जनपचनमिति योग्यताज्ञानादिव वह्नौ न व्यञ्जनपचनत्वाभाव इति ज्ञानादपि शाब्दबोधातुदयप्रसंगात्। नहि सर्वेषामप्रामाण्यनिश्चयानामभावास्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभाव एव

निवेश्यन्ते व्यञ्जनपचनत्वाभावप्रकारतात्वावच्छेदेन व्यञ्जनपचनविशेष्यता-निरूपितत्वस्य तदभावप्रकारकज्ञानत्वावच्छेदेन तत्तद्विशेष्यत्वावच्छिन्नतद्-भावप्रकारताकत्वस्य च निश्चयानामनुगमसम्भवेन तत्तदनुगमकधर्मावच्छिन्न-प्रतियोगिताकत्वेनैव तदभावस्य जनकतावच्छेदकत्वात् अनुगमस्यान्याय्यत्वात् ननु तथापि व्यञ्जनपचनत्वाभावप्रकारकत्वसामानाधिकरण्यमात्रेण व्यञ्जन-पचनविशेष्यत्वावच्छिन्नत्वावगाहिज्ञानमप्रवेश्यप्रामाण्यज्ञानस्यात्यन्ताभावः तत्र दाहार्थव्यक्के (१२ख) रन्योन्याभावश्च वह्निर्न व्यञ्जनपचनमिति योग्यताज्ञान-कारणतावच्छेदककुक्षौ तत्त्वेन तद्व्यक्तित्वावच्छिन्नाभावत्वेन वा प्रवेशनीयो-ऽन्यथा तदनन्तरं शाब्दबुद्धिप्रसङ्गात्। तथा च तादृशाप्रामाण्यनिश्चयाक्रान्त-योग्यताज्ञानानन्तरोत्पन्नशाब्दातिरिक्तज्ञाने व्यभिचारवारणाय तादृशयोग्यता-ज्ञानाव्यवहितोत्तरोत्पत्तिकशाब्दत्वमेव जन्यतावच्छेदकमभ्युपेतुमुचितं, न तु तत्त-दप्रामाण्यनिश्चयानास्कन्दितयोग्यताज्ञानाव्यवहितोत्तरोत्पत्तिकत्वादि गौरवा-दिति चेत, तादृशाप्रामाण्यज्ञानाभावानां स्वातन्त्र्येण जनकत्वाभ्युपगमात। यत्र चैकत्र योग्यताज्ञानेऽननुगतमप्रामाण्यज्ञानाच्च शाब्दबोधस्तत्र द्वितीययोग्यता-ज्ञानोत्पत्तिसमयविनष्टात्मगुणान्तरमेव प्रतिबन्धकमनुगताप्रामाण्यज्ञानाभावस्तु

शाब्दत्वप्रवेशेऽपि कार्यतावच्छेदककुक्षाववश्यं प्रवेश्यः[1]। अन्यथैकविधियोग्य-ताज्ञाने सत्यप्यप्रामाण्यनिश्चये योग्यताज्ञानान्तरज्ञानाज्जायमानशाब्दबोधे व्यभिचारतादवस्थ्यात्,भवन्तु तेऽपि स्वातन्त्र्येण जनकाः, अप्रामाण्यनिश्चयव-

दन्यजन्यबुद्धावप्रामाण्यनिश्चयाभावस्य[2] जनकत्वसम्भवात् ज्ञानविशेष एव तस्य सहकारित्वोपगमाच्च नातिप्रसङ्गः। एतेन यत्र व्यञ्जनपचनत्वादे (?) श्चानुपपन्नं, तथा हि प्रसिद्धजात्यवच्छिन्नबाधवशात् प्रसिद्धजातिं धर्मत्वेनावच्छिद्यमानायां विधेयतावच्छेदकतायां तदवच्छेदकविशिष्टा तद्-वच्छिन्नपरिमाणवत्वेतरस्माद्व्यावर्त्तमानक्लृप्तलाघवमवच्छिन्नपरिमाणवत्त्वे गृ-हीतमनुसंहितञ्च, प्रसिद्धजातीतरत्वेन क्लृप्तजातिगौरवमतो जात्यवच्छि-न्नत्वमवच्छिन्नपरिमाणवत्त्वञ्च भासतामथ वा धर्मे जातिभिन्नत्वावच्छिन्न-परिमाणत्वाभिन्नत्वे सिद्ध्येतामिति सत्प्रतिपक्षवत्कथं विनिगमः। नहि तयो-गौरवघटितसामग्र्योरन्यतरस्य बलाबलमनुपश्याम इति चेत् अत्राहुः कल्पना-गौरवग्रहः स्वधर्मितावच्छेदकावच्छिन्नभेदमुपनाययतीत्यत्र प्रमाणाभावः पर्यवसितसाध्यतावच्छेदकप्रकारककल्पनासामान्याभावस्य योग्यायोग्य-

१ निवेश्याः, वि० पु० पा०। २ भावं, वि० पु० पा०।

प्रतियोगिकत्वेनायोग्यतया दुर्ग्रहत्वात्, अन्ततो अन्यथाख्यातिस्वरूपाया अपि तादृशकल्पनायां[1] (१३क) भात्रप्रकारतात्वावच्छेदेन व्यञ्जनपचनविशेष्यतानिरूपकत्वावगाहिप्रथमाप्रामाण्यज्ञान ततो व्यञ्जनपचनत्वाभावप्रकारताकं तद्विशेष्यकञ्च योग्यताज्ञानं तदनन्तरोत्पन्ने शाब्दबोधे तादृशाप्रामाण्यज्ञानाभावविशिष्टतत्प्रकारकयोग्यताज्ञानकार्यतायां व्यभिचारः। द्वितीयक्षणावच्छेदेनाप्रामाण्यज्ञानाभावोपलक्षितस्य योग्यताज्ञानस्याव्यवहितोत्तरद्वितीयक्षणे जायमानत्वात् तदव्यवहितपूर्वक्षणे चा[2]प्रामाण्यज्ञानाभावविशिष्टयोग्यताज्ञानाभावात्।

अथ यावत्स्वमप्रामाण्यज्ञानाभावस्यानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावः कालानवच्छिन्नविशेषणतया योग्यताज्ञाने विशेषणीभूयजन्यतावच्छेदककुक्षौ निवेश इति चेन्, तर्हि अप्रामाण्यज्ञानस्थितिकाले एवोत्पन्नतन्नाशकालनिष्ठयोग्यताज्ञानेन जनितस्य शाब्दबोधस्यासंग्रहः, अप्रामाण्यज्ञानानधिकरणं यः स्वाधिकरणक्षणः अप्रामाण्यज्ञानाभावविशिष्टस्य स्वाधिकरणम्त्रा यः क्षणः तदव्यवहितोत्तरोत्पत्तिमत्त्वम् आमान्ताप्रामाण्यज्ञानस्य सर्वत्र लक्षणे सम्भवात् प्रथमसम्पत्ति द्वितीयप्रामाण्यज्ञानास्पृष्टयोग्यताज्ञानतृतीयक्षणोत्पन्नशाब्दबुद्धेरनुपग्राहि चेत्यपि परास्तम्, अप्रामाण्यज्ञानाभावस्य पृथगेव जनकत्वाभ्युपगमात्। एवमाहार्यबुद्धीनान्तत्समानकालीनगुणान्तरस्य वा प्रतिबन्धकत्वमपि व्याख्यातम्।

वस्तुतस्तु, आहार्यव्यक्तीनामन्योन्याभावा न यौगपद्येनावच्छेदकाः अवच्छेदकतापर्याप्तेरुपपत्तिविरोधादेकविशिष्टापरस्य तथात्वे परस्परविशेष्यविशेषणभावे विनिगमकाभावेन गुरुतरानन्तकारणताकल्पनप्रसङ्गात्, प्रत्येकमेतेषामनेककारणतावच्छेदकत्वमभ्युपेयं, तत्तदाहार्यव्यक्तिभेदविशिष्टयोग्यताज्ञानानां परस्परसहकारित्वाभ्युपगमेन नैकस्मादाहार्यान्तरभिन्नाद्योग्यताज्ञानात् शाब्दबुद्धिप्रसङ्गः, तदाहार्यव्यक्तिभिन्नयोग्यताज्ञानाभावात्। यत्र च क्रमिकमाहार्यज्ञानद्वयमेकदाऽवतिष्ठते तत्र व्यक्तिद्वय [१३ख] भेदं प्रवेश्यैककारणताकल्पनमपि न तथा[3]ऽधतिमावहति, भवतु वा तत्र प्रथमसाहार्यव्यक्तिः[4] प्रतिबन्धकत्वैव द्वितीयाहार्यव्यक्तिभिन्नस्य च योग्यताज्ञानस्य कारणता, तेन तृतीयक्षणोत्पन्नानाहार्ययोग्यताज्ञानान्न शाब्दबोधानुपपत्तिः।

---

१ व्यञ्जनपचनत्वा (अधिकः पाठः) वि० पु० पा०। २ वा, वि० पु० पा०।
३ बया अ.त, वि० पु० पा०। ४ व्यक्तेः, वि० पु० पा०।

एवञ्च यदाऽऽहार्यज्ञानव्यक्त्यनन्तरं न किमपि सविषयकं तज्ज्ञानभिन्न-योग्यताज्ञानत्वेन कारणतायां[1] योग्यताज्ञानाव्यवहितोत्तरोत्पत्तिकत्वमेव जन्यतावच्छेदकं न तु तत्राहार्यव्यक्तिभेदस्यापि योग्यताज्ञानविशेषण[2]सिद्धाया-स्तत्रान्तर्भावः, शाब्दमन्तर्भावे, व्यञ्जनपचनत्ववान् वह्निरित्येवमाकारिकेच्छायां तादृशज्ञानस्य कारणत्वान्तरकल्पनप्रसङ्गात्, व्यञ्जनपचनत्वाभाववद्वह्न्यभाव-गोचरवद्द्वेषेण विनश्यदवस्थानिष्ठासाधनताज्ञानोत्पादितेन व्यञ्जनपचनत्वाभाव-वद्वह्नीच्छाऽनुदयेन समानविषयकेच्छासामान्ये तथाविधज्ञानापेक्षया सर्वतन्त्र-सिद्धायास्त्वदृढनिरूढत्वात्, वि[3] [व्यु] त्पादयिष्यते च द्वेषयोर्निर्णेच्छा, तथा च तदाहार्यव्यक्तिभिन्नयोग्यताज्ञानकारणतैव लाघवज्ञानसहकारिसकलमप्यनु-मितिजनकज्ञानमाक्रान्तमिति नातिरिक्तकारणताकल्पनम् ।

ननु तथापि यत्र वह्निव्याप्यवान् महानसीयेतरवह्न्यभाववांश्च पर्वतोऽथ च सर्वो वह्निर्महानसीयश्च वह्निर्व्यञ्जनपचनमितिनिश्चयस्तदा यदा-हार्यं वह्निर्व्यञ्जनपचनमिति ज्ञानं ततो व्यञ्जनपचनमहानसीयवह्निमानित्यनु-मितिस्स्यात्, तदाहार्यभिन्नतादृशज्ञानत्वेन शाब्दबोधेच्छायां च कारणत्वाभावात्, तादृशस्थलेऽनुमितिमात्रसामग्रीसद्भावेन शाब्दबोधादिप्रसङ्गविरहेण तादृश-कारणकल्पकाभावादिति तत्तदाहार्यज्ञानभिन्नतादृशज्ञानत्वेन कारणान्तरकल्पन-मावश्यकमिति चेदत्र तादृशाहार्यज्ञानसत्त्वेऽपि तादृशानुमिति[4]रिष्टैवेति भावः, अनापत्त्या तदाहार्यभिन्नज्ञानस्य कारणतास्वतन्त्रतयैवेति अस्तु गतिः ।

उपाध्यायानुसारिणस्तु कल्पनालाघवोपनीतं नानुमितौ विषयः किन्तु तदुदीच्ये मानसज्ञाने तथाहि यत्र महानसीयवह्न्यनुमितिजनिकया सामग्र्या सह महानसीयवह्निव्यञ्जनपचनमितिनिश्चयस्तत्र महानसीयवह्निमानयमित्ये-वानुमितिः ।

एवं यत्र शुद्धवह्नित्वावच्छेदेन दाहकत्वावगाहिवह्निव्याप्यधूमवान् पर्वत इति परामर्शस्तत्र वह्निमानित्येवानुमिति रुदीच्यस्तु व्यञ्जनपचनमहान [सोय] वह्निमान् दाहकवह्निमान्[5] पर्वत इत्यादिविशिष्टवैशिष्ट्यावगाहिमानसो

१ याः । पाठा । २ तथा प्रवेशः प्रयोजनविरहात्, संयोगादौ प्रसिद्धत्वारणार्थं परं-योग्यसविषयकजातेरुपनायकतावच्छेदकतया । ज० अधि० पाठः । ३ व्युत्पादयिष्यते । ख० पा० । ४ तादृशानुमितिविधुरेति ऋजवः । ज० पा । ५ वां । ज० पाठः ।

निश्चयः तन्निश्चयत्वसम्पादकतयैव लाघवज्ञानस्योपयोगित्वम्[1], अन्यथा विरोधिकोटिभानप्रतिबन्धकविशेषदर्शनाभावेन पर्वतो दाहकवह्निमान्नवेति संशयप्रसङ्गस्य दुर्वारत्वात् तार्णतरवह्नित्वावच्छेदेन[2] दाहकत्वे पर्वतो वह्निमानित्यनुमितेरनन्तरं न तावद्दाहकवह्निसामान्याभावकोटिकसंशयः अनुमितावविरोधित्वात्, नापि दाहकवह्निः दाहकत्वविशिष्टवह्नित्वावच्छिन्नप्रतियोगिताकाभावं चावगाहनः वह्नित्वावच्छेदेन दाहकत्वनिर्णयस्य दाहकत्वविशिष्टे वह्नित्वे प्रतियोगितावच्छेदकत्वबुद्धौ विरोधित्वात्, नहि सम्भवति प्रमेयत्वादेर्धूमत्वव्यापकत्वग्रहे प्रमेयधूमो नास्तीति प्रतीत्या धूमत्वनिष्ठायां प्रतियोगितावच्छेदकतायां सामानाधिकरण्येन प्रमेयत्वावच्छिन्नस्य धूमवृत्तौ प्रतियोगितायां प्रमेयत्वधूमत्वोभयावच्छिन्नस्य संसर्गमर्यादयापि ग्रहणं व्यवहारसिद्धञ्च, तथाविधबुद्ध्यारव्यावर्त्तकत्वग्रहस्य प्रतिबन्धकत्वम्। सत्तात्वावच्छेदेन गुणान्यत्वविशिष्टग्रहणस्यापि सत्तानिष्ठप्रतियोगितायां गुणान्यत्ववैशिष्ट्यावच्छिन्नत्वग्रहं प्रति विरोधित्वमेव, गुणान्यसत्ता नास्तीति प्रतीतौ गुणान्यत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नायां प्रतियोगितायां शुद्धसत्तात्वावच्छिन्नत्वमेव विषयः गुणान्यत्वन्तु प्रतियोगिविशेषणमात्रमितिप्रतिपादितप्रायं प्राक्।

किञ्च वह्नित्वावच्छेदेन दाहकत्वनिर्णयस्य वह्नित्ववत्तया गृहीते धर्मिणि दाहकत्वाभावबुद्धिं प्रति वह्निमत्तया निर्णीते[3] दाहकवह्निसामान्याभावबुद्धिं प्रत्यपि विरोधित्वम्, तदवच्छेदकधर्मविशिष्टवैशिष्ट्यबुद्धेस्तद्[4]विशिष्टतदभावबुद्धिविरोधित्वात, नहि रजतत्वावच्छेदेन द्रव्यत्वनिर्णये रजतवति धर्मिणि द्रव्याभावो द्रव्यरजताभावो वा गृह्यते। न च सत्तात्वावच्छेदेन गुणान्यत्ववैशिष्ट्यग्रहे गुणे सत्तावैशिष्ट्यग्रहे च गुणे गुणान्यसत्ता नास्तीति प्रतीतिरनुपपन्नैवेति वाच्यम्, विशेषणतासंसर्गभेदेन प्रतिबध्यप्रतिबन्धकभावभेदध्रौव्ये सामानाधिकरण्यघटितसामानाधिकरण्यसम्बन्धावच्छिन्ना या गुणान्यत्वनिष्ठावच्छेदकतातन्निरूपितसत्तात्वनिष्ठाप्रतियोगितावच्छेदकत्वावगाहिन्यां सामानाधिकरण्यसंसर्गावच्छिन्नगुणान्यत्वविशिष्टावच्छेदकतानिरूपितासत्तात्वावछिन्नप्रतियोगित्वाव -

१ ज्ञानादेरूपयोगः। ख०। पाठः। २ निर्णीते च वह्नित्वावच्छेदेन पर्वतो वह्निमानित्यनुमितेरनन्तरम्। ख. पा.। ३ निश्चिते। ख. पा.। ४ तद। ख० पा०।

गाहिन्यां वा गुणे गुणान्यसत्ता नास्तीति बुद्धौ सत्त्वावच्छेदेन गुणान्यत्वाधि [१४ख] करणत्वावगाहिबुद्धिविशिष्टाया गुणः सत्तावानितिबुद्धेरेवविरोधित्वात् ।

नन्[1] सत्तात्वावच्छेदेन गुणान्यत्वसामानाधिकरण्यावगाहिबुद्धिवि - शिष्टायाः , यत्र पुनराधारताघटितसामानाधिकरण्येन सत्तात्वनिष्ठप्रतियो- गितावच्छेदकतायामवच्छेदकीभूय गुणान्यत्वं भासते तादृशबुद्धौ सत्तागुणान्ये- वेति ग्रहसहकृतं गुणस्सन्निति ज्ञानं प्रतिबन्धकमेव, स्यादेतन सत्यामपि वह्निर्दा- हक एव वह्निमान् पर्वत इति बुद्धौ जायमाना दाहकवह्निमानितिमहानसीय- विशिष्टवैशिष्ट्यबुद्धिस्संशयरूपा एव स्यात् दाहकत्वावच्छिन्नसंयोगसंसर्गाव- च्छिन्नप्रतियोगिताकवह्निसामान्याभावस्यापरकोटितया भानसम्भवात् । दृश्यते हि गुणान्यत्वावच्छिन्नसमवायसंसर्गेण शुद्धसत्तात्वे,[2] न चावच्छिन्नां प्रतियोगितामवगाहमानो गुणान्यत्वोपलक्षितसत्ताभावप्रत्ययः । न च ता- दृशीं प्रतीतिं शुद्धसंयोगेन वह्निमत्तानुमितिः पूर्वोत्पन्ना प्रतिबद्धामर्हति,[3] शुद्धसं- योगसंसर्गकप्रतियोगिमत्ताबुद्धेर्विशिष्टसंयोगावच्छिन्नप्रतियोगिताकाभावबुद्धा - वविरोधत्वात् । नन्वेवं शुद्धसंयोगसंसर्गेण दाहकवह्निविशिष्टबुद्धेर्विशिष्टसंयोग- संसर्गावच्छिन्नप्रतियोगिकाभावावगाहित्वेऽपि न संशयत्वं कोटिद्वयप्रकारतायाः परस्परावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वे सत्येव ज्ञानस्य संशयत्वात्,[4] अन्यथा धर्मितावच्छेदकसामानाधिकरण्यमात्रेण कोटिद्वयमव गाहमानस्य समुच्चयस्यापि संशयत्वापत्तेरिति चेन्न, पर्वतो दाहकवह्निमानितिवि- शिष्टवैशिष्ट्यबुद्धेरपि दाहकत्वावच्छिन्नसंयोगसंसर्गेण वह्निप्रकारकत्वात् दाहको वह्निरितिविशेषणतावच्छेदकप्रकारकनिर्णयस्य दाहकत्वावच्छिन्नवैशिष्ट्य-[5] संसर्गतानिरूपितवह्निप्रकारताकबुद्धित्वमेव हि जन्यतावच्छेदकम्, अत एव शशीयत्वावच्छिन्नप्रतियोगितया शृङ्गमभावविशेषणतयावगाहमानस्य व्यधि- करणधर्मावच्छिन्नाभावप्रत्ययस्य शृङ्गं शशीयमिति निरवयं विनाऽनुपपत्ति- रिति मणिकृतः ।

एवञ्च पर्वते दाहकत्वावच्छिन्नसंयोगसंसर्गेण दाहकत्वविशिष्टवह्नित्वसं- सर्गेण वह्निसामान्याभावञ्च कोटितयाऽवगाहमानं ज्ञानं कथन्न संशयः स्यादिति चेत् मैवं वह्नित्वावच्छेदेन दाहकत्वग्रहस्य दाहकत्वावच्छिन्नसंयोगसंसर्गाव -

१ नच ख० पु० पा० । २ नाप्यवच्छिन्ना । पा० ख० । ३ प्रतिबद्धु । ख० पा० ।
४ संभवात् । ख० पा० । ५ विशिष्ट । ख० पा०

[१२क] च्छिन्नत्वावगाहिबुद्धौ विरोधित्वात्, शुद्धसंयोगस्यैव प्रतियोगितावच्छेदकत्वसम्भवेन दाहकत्वावच्छिन्नत्वस्य वह्निसंयोगाव्यावर्त्तकत्वात्। वस्तुतस्तु दाहकत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगितासंसर्गेणाभावे वह्निमवगाहमानायां बुद्धेर्वह्नित्वसामानाधिकरण्यमात्रेण दाहकत्वावगाहित्वनियमात्, अन्यादृश्यास्तादृशबुद्धेरप्रसिद्धत्वात् तत्सामग्र्यां वह्नित्वसामानाधिकरण्यमात्रेण दाहकत्वनिश्चयो घटकः, प्रकृते तु वह्नित्वावच्छेदेन दाहकत्वनिश्चयस्यैव सत्त्वान्न तादृशाभावबुद्धिः।

असकृदुपदर्शितञ्च धर्मितावच्छेदकसामानाधिकरण्यमात्रेण तदवच्छेदेन च निश्चययोर्वैधर्म्यम्। ननु वह्निर्दाहक एवेति ज्ञानस्य वह्निव्यापकदाहकत्वविशेषणतायाः संसर्गतया भानमेव शुद्धविशेषणताया अपि तथा भानं दुर्वारम्, असंसर्गाग्रहसत्त्वादिति सामानाधिकरण्यमात्रेणापि वह्नौ दाहकत्वनिश्चयो वर्त्तत एवेति चेत् एवं सति पर्वतो दाहकवह्निमानिति मानसप्रत्ययोऽपि दाहकत्वावच्छिन्नसंयोगेन संशयस्वरूपोऽपि संयोगेन निश्चयात्मकमेव स्यात्, एवं शरीरगौरवोपनीतमपि गुरुधर्मावृत्तित्वादिकमनुमितौ न विषयः, अनुमितौ व्यापकतावच्छेदकत्वेनागृहीतस्य वस्तुनो विधेयविशेषणत्वेन भानायोगात्। किन्तु तदुदीच्यमानसज्ञाने, तथाहि यत्र जलाहरणकारणतावच्छेदकतानिरूपकत्वव्याप्यवत्तापरामर्शसमकालं कम्बुग्रीवादिमत्त्वे शरीरगौरवस्य घटत्वे तत्लाघवप्रतिसंधानं तत्र जलाहरणकारणत्वमवच्छेदकतानिरूपकमित्येवानुमितिस्ततः कम्बुग्रीवादिमत्त्वाव्यावृत्ताजलाहरणतावच्छेदकतेति मानसो निर्णयः तन्निर्णयसम्पादकतया गौरवग्रहोपयोगः, तन्निश्चयं प्रति ग्राह्यसंशयस्य तत्सामग्र्या वा या प्रतिबन्धकता तस्यां गौरवग्रहस्योत्तेजकत्वात्। भवतु वा अवच्छेदकतायां घटत्ववृत्तित्वग्राहकसामग्रीसमवाहितत्वस्य कम्बुग्रीवादिमत्त्वगोचरगौरवग्रहस्य कम्बुग्रीवादिमत्त्ववृत्त्यवच्छेदकताबुद्धौ प्रतिबन्धकतागौरवग्रहेण[1] प्रतिबद्धायां कम्बुग्रीवादिमत्त्वप्रकारतावच्छेदकत्वबुद्धौ विशेषणज्ञानासंसर्गाग्रहादिसामान्यसामग्रीवशादवच्छेदकता न कम्बुग्रीवादिमत्त्ववृत्तिरित्यर्थो निश्चयः गौरवग्रहस्य प्रतिबन्धकतायां तद्रूप्येणावच्छेदकताग्राहकबलवत्प्रमाणमुत्तेजकं तेन दण्डत्वावच्छिन्नायामेव कारणतायां दण्डत्वावच्छिन्नत्वग्राहकानुमानादिसत्त्वे गुरुलघूभयावच्छिन्नकारणत्वानुमितावपि न क्षतिः। भवतु वा जन्यप्रत्यक्षत्वमेव गौरवग्रहप्रतिबध्यता-

---

१ प्रतिबन्धकतायाम्। ख० पा०।

वच्छेदकम् . अनुमानागमादिना गुरुधर्मावच्छिन्नकारणताग्रहस्तु जन्यप्रत्यक्षत्व-जातौ मानः, एतेन विशिष्टबुद्धित्वमीश्वरज्ञानसाधारणं न जन्यतावच्छेदकं जन्य-त्वविशेषितन्तु प्रागभावध्वंसप्रतियोगित्वादिस्वरूपजन्यत्वभेदाद्बहुविधम्, बुद्धित्व-मेव समवायिकालिकोभयसंसर्गेण जन्यतावच्छेदकमितिमतन्तु मात्रस्य[1] कालो-पाधितामते न संघटते इत्यादि दोषाणान्नावकाशः।

ईश्वरबुद्धिव्यावृत्तायाः जन्यप्रत्यक्षत्वजातेरेव जन्यतावच्छेदकत्वात्। परोक्षबुद्धौ पदशक्तिव्याप्त्यादितादृप्यग्रहावश्यम्भावेन गौरवसहस्रस्याकिञ्चि-त्करत्वात् उपनीतस्य तत्र भानायोगात्। एवम् लाघववशादपि न लघुधर्मावच्छि-न्नत्वादिकमनुमितिविषयः, परन्तु लाघवज्ञानेनोत्तेजितेऽवच्छेदकता घटत्ववृ-त्तिर्नवेत्यादिसंशये प्रतिबद्धे वाऽवच्छेदकतायां घटत्वावृत्तित्वभाने मानसो घटत्ववृ-त्यवच्छेदकतानिर्णयः[2] घटत्वावृत्यवच्छेदकतेतिजन्यप्रत्यक्षं प्रति घटत्वं लघ्वितिग्रहस्य प्रतिबन्धकतायां [ १६क ] घटत्ववृत्यवच्छेदकताग्रहविरोधिनामभावोऽपि निवेशात्[3], तेन सति व्यभिचारग्रहादौ लघुघटत्वादिवृत्तित्वाभावोऽवच्छेदकतायां भासते, भासते च सत्यपि घटत्वे लाघवज्ञाने विरोधिसमये च परोक्षसामग्रीव-शात्, एवमितरबाधोपनीतोऽपि नानुमितिगोचरः परन्तु सति तार्णवह्निबाध-वह्निव्याप्यवत्तापरामर्शोभयस्मिन् पर्वतो वह्निमानित्येवानुमितिः वस्तुतस्तु[4], ता-र्णवहन्यभावविशिष्टवह्निमति[5] अतार्णवह्नेः परिशेषानुमानान्तरम्, अथवा तार्ण-वह्निबाधविशिष्टस्य पर्वते वह्निमत्तया वह्निव्याप्यवत्तया वा निर्णयस्यातार्णवहन्य-भावविशिष्टबुद्धौ बिरोधित्वादर्थादतार्णवह्निमत्तानिर्णयः, पर्वते महानस एव मता-न्तरेऽप्यनुमितौ तार्णवह्निभेदस्य विशेषणत्वेनभानार्थं पूर्वं तत्वोपस्थितेरावस्यक-त्वात्तार्णवह्निभिन्नवह्नेरनुपस्थितावप्यनुमितेरिव मानसस्यापि विशेष्यविशेषण-न्यायेनैव सम्भवादित्याहुः।

अत्र मिश्रानुसारिणः, इतरबाधनिर्णयस्य विशेष्यतावच्छेदकप्रका-रकनिर्णयविधया विशिष्टवैशिष्ट्यबुद्धिविशेषे क्लृप्तकारणभावस्यानुमितिसाम-ग्रीमध्यप्रवेशाभ्युपगममात्रेणानुमितेरप्युपनीतबाधितेतरवस्त्ववगाहित्वे बाध-काभावः नन्वितरबाधोपनीतस्य वस्तुनोऽनुमितौ भानस्वीकारे संशयात्मिकानु-

---

पु. १ संसर्गं। ख० पा०। २ निश्चयः। ख० पा०। ३ निविशते। ख० पा०।
४ विरोधिषु सत्सु:। ख० पा०। ५ वह्निमत्त्वालिङ्गकं तार्णवह्नेः। ख. पा.
६ तदुपस्थितेः। ख० पा,

मितिप्रसङ्गः तथा हि यत्र वह्निव्याप्यवानभावव्याप्यवांश्च पर्वत इति समूहालम्बनात्मकः परामर्शः स एव तार्णभिन्नवह्नेस्तार्णवह्न्यभावभिन्नाभावस्य च बाधावगाही ततस्तार्णवह्निमान् तार्णवह्न्यभाववान् वा पर्वत इति संशयात्मिकानुमितिरर्थादुत्पद्यमाना केन वार्यते, नहि तत्र तार्णे वह्निव्याप्यवत्ताया वह्न्यभावतार्णवह्न्यभावव्याप्यवत्ताया वा परामर्शो विद्यते, येन परस्परप्रतिबन्धेनैकतरस्याप्यनुमितिरूत्पद्येत इति चेत् मैवं तादृशस्थले तार्णवह्निमान् तदभाववांश्च पर्वत इति समूहालम्बनानुमितेरिष्टत्वात्। न च तस्यास्सं [ १६ख ] शयत्वं संशयो हि धर्मितावच्छेदकावच्छेदेन एकतरकोटिमवश्यमवगाहते, तथा च प्रकृते यदि पर्वतत्वावच्छेदेन तार्णवह्निं तदभावम्वाऽवगाहते तदा संशयत्वान्नत्वेवम्, परन्तु शुद्धमेव वह्न्यभावं च तथा विषयीकरोति पर्वतत्वावच्छेदेन वह्निव्याप्यवत्ताया अभावव्याप्यवत्तायाश्च परामर्शस्य शुद्धवह्नित्वाभावत्वावच्छिन्ने पर्वतत्वव्यापकतावगाहिन्यामेवानुमितौ जनकत्वात्, तार्णवह्नितदभावत्वाद्यवच्छेदेन पर्वतत्वव्यापकतावगाहिन्यनुमितिस्तु पर्वतत्वाद्यवच्छेदेन - तार्णवह्न्यादि व्याप्यवत्तापरामर्शमपेक्ष्यते।

न च तार्णवह्नित्वादिभिन्नरूपेण पर्वतत्वव्यापकतामवगाहमानं तार्णवह्निविशिष्टज्ञानं पर्वतत्वावच्छेदेन तार्णवह्निसंशयो भवितुमर्हति, प्रमेयत्वादिना पर्वतत्वव्यापकतागोचरस्य तार्णवह्नितदभावसमुच्चयस्य संशयत्वप्रसङ्गात् पर्वतत्वावच्छेदेन तार्णवह्निविशिष्टबुद्धित्वन्तु पर्वतत्वव्यापकतार्णवह्निनिरूपितसंयोगसंसर्गेण तार्णवह्निप्रकारकबुद्धित्वन्न तु पर्वतत्वव्यापकेन तार्णवह्निप्रकारकबुद्धित्वं संयोगस्य हि व्यापकत्वं यदि संयोगत्वादिना सामान्येन तदाप्रकृतबुद्धेः प्रामाण्यप्रसंगः, यदि च तार्णवह्निनिरूपितसंयोगत्वादिनातदापि द्रव्यत्वावच्छेदेन रूपवत्ताबुद्धेः प्रामाण्यप्रसङ्गमित्यादिप्रपञ्चितमितरत्र, स्वीक्रियताम्वा पर्वते वह्निव्याप्यवत्तायास्तार्णेतरवह्न्यभावस्य च निर्णयः; तार्णवह्न्यभाववान् पर्वत इति विशिष्टबुद्धावनुमितौ वा प्रतिबन्धकः, अत एव तार्णेतर वह्न्यभाववान् वह्निव्याप्यवांश्च यः पर्वतः तत्समानकालीनत्वाद्यवच्छेदेन तार्णवह्न्यभावनिर्णये सति तादृशपर्वतसमानकालीनः पर्वत इत्यवच्छेदकधर्मदर्शनादेस्तार्णवह्न्यभाववत् पर्वतबुद्धौ न प्रतिबन्धकतान्तरम् इतरबाधविशिष्टपरामर्शस्यानुमितेर्वा[1] तदभावकोटिशङ्कानिवर्त्त (१७ क) कत्वावश्यकतया च न

१ परामर्शे प्रतिबन्धतयैव फलाभावोपपत्तेः, उपाध्यायमतेऽपि इतरबाधविशिष्टपरामर्शप्रयोज्यमानसे निश्चयत्वसम्पादनाय इतरबाधविशिष्टस्य। पा० ख।

गौरवावकाशः एवमवश्यमभ्युपेयमनुमितौ गौरवग्रहोपनीतस्य गुरुधर्मभेदादेर्विषयत्वम्, तथाहि क्षितिः सकर्तृका कार्यत्वादित्यादिपरामर्शसमकालं द्वित्वविशेषावच्छेदेन गौरवग्रहे सति तादृशद्वित्ववद्भेदः कर्तरि प्रतीयते, तच्चानुमानेन मनसैव वेत्यत्र परम्विवादः, तादृशद्वित्वाभावश्च न मनसोपनेतुं शक्यते, कुत्रापि तदप्रतीतेरुपनायकज्ञानाभावात् कर्तृतदितरावृत्तित्वे सति लौकिककर्तृतदितरावृत्तित्वोभयावृत्तियद्द्वित्वम् तस्य भगवदितरवस्तुमात्रवृत्तितया तदभावस्य भगवदितरत्राऽप्रसिद्धेः, घटादावचेतने हि घटपटादिवृत्ति चेतनावृत्तिजीवेषु तु जीवद्वयवृत्तिभगवति वृत्तिद्वित्वं वर्त्तत इति भगवदद्वैतसिद्धपूर्वन्न कुत्रापि तादृशद्वित्ववद्भेदप्रसिद्धिः, अप्रसिद्धे च वस्तुनि लौकिकालौकिकसन्निकर्षविरहान्न मनसो व्यापारप्रसरः। न च पूर्वं यत्किञ्चिद्भेदोपस्थितौ भेदत्वसामान्यलक्षणयोपतिष्ठमाने भेदे प्रतियोगितया तथा विध द्वित्ववदाधेयतया च क्षितिकर्तुरुपनीतस्य मानसं विशिष्ट ज्ञानमनुमितौ द्वित्ववद्भेदभानोपगमेऽपि पूर्वानुपस्थितस्य विशेषणतया भानासम्भवादिति वाच्यम्, सामान्यलक्षणयोपतिष्ठमाने वस्तुनि स्वतन्त्रज्ञातवस्तूपनयायोगात्, अन्यथा प्रतियोगितासंसर्गावच्छिन्नद्वित्ववत् प्रकारतानिरूपितालौकिकमुख्यविशेष्यतया जन्यप्रत्यक्षे स्वप्रकारीभूतद्वित्ववत् प्रतियोगिकत्वसंसर्गेण ज्ञानस्य कारणतायां व्यभिचारप्रसङ्गात्, पूर्वं प्रतियोगितया द्वित्ववद्विशिष्टबुद्ध्यभावात्, तस्मात् उपनीतधर्मविशेष्यतया जन्यप्रत्यक्षे लौकिकसन्निकर्षज्ञानलक्षणान्यतरसहकारि न तु(१७ख)सामान्यलक्षणेत्येवमवश्यमभ्युपेयम्। इन्द्रियसन्निकृष्टशङ्खादौ स्वतन्त्रस्मृतपीतत्वादिभ्रमविशेष्यता तु लौकिकी, वनगमनादिप्रकारतानिरूपितविशेष्यता तु ज्ञानोपनीते रामादौ न मुख्या किन्तु ज्ञानपारतन्त्र्येणोत्प्रेक्षया वनगामिनं रामं जानामीत्याकारिकाया एव सर्वत्र स्वीकारात्। यदि च तद्विषयकज्ञानमेव सामान्यलक्षणा न तु तत्प्रकारकं तदापि क्षिति[1]कर्तृविशेष्यकबुद्धौ प्रतिबन्धकत्वमिति चेन्न, गौरवसहस्रे गृहीतेऽपि लौकिककर्तरि तादृशद्वित्वग्रहात्, सति द्वित्ववति द्वित्वाभाववति चोभयत्र गौरवग्रहे सत्याम्वा तदुभयबुभुत्सायाम्वा क्षितिकर्त्तर्यपि कथितद्वित्वसंशयोत्पादाच्च तत्तदुत्तेजकाभावविशिष्टगौरवग्रहस्य प्रतिबन्धकत्वापेक्षया तदितरत्र गौरवग्रहाभावसहकृतस्य तत्र गौरवग्रहस्य तद्भेदोपनायकतापक्ष एव साधीयान्, तथाहि तादृशस्य, द्वित्वविशेषावच्छेदेन गौरवग्रहस्य कर्तृत्वावच्छिन्नविधेयत्वेनाभिन्ना वा या प्रकारता तन्निरूपिता या उद्देश्यत्वभिन्नाया तदनवच्छिन्नाया द्वित्ववद्भेदविशेष्यतया विशिष्टानुमिति

१। कर्तरि द्वित्ववद्भेद इव द्वित्वमपि पूर्वोपनीतं मानसप्रत्यक्षे कुतो न विषय इति संशयस्या-तादृशद्वित्वावच्छेदेन गौरवग्रहस्य तादृशद्वित्वप्रकारक इति ख० पु० अधिकः पाठः।

प्रति कारणत्वं भवति च क्षित्युद्देश्यतानिरूपितकर्तृविधेयतया सार्द्धमवच्छिन्ना भिन्ना वा कर्तुः प्रकारतातन्निरूपितसंसर्गद्वयसंयोगविशेषणतायां च संयोगसंसर्गतया क्षितिविशेषणतासंसर्गतया द्वित्ववद्भेदस्य विशष्यत्वनिरूप्यते द्वित्ववद्भेदपतककर्त्रनुमाने च कर्तृप्रकारतानिरूपितासत्यपि द्वित्ववद्भेदविशेष्यताभवत्युद्देश्यतया सार्द्धमवच्छिन्नाभिन्ना वेत्यतो न तत्र व्यभिचारः।

अत एव द्वित्ववद्भेदस्य पूर्वप्रसिद्धस्य प्रकारतया भानसम्भवेऽपि न विशिष्टवैशिष्ट्यानुपपत्तिः, एकत्र द्वयमितिन्यायेन नाप्यनित्येयाङ्गमनसेत्यादौ विशिष्टवैशिष्ट्यबुद्ध्युपगमात्, यथा च दण्डीकुण्डलीत्यादौ पुरुषो नवेत्यादौ वा भिन्नप्रकारताद्वय (१८क) निरूपितमेकं विशेष्यत्वं तथा प्रकृते विभिन्नविशेष्यताद्वयनिरूपितमेकं कर्त्तरि प्रकारत्वमेकस्या एव कर्तृनिष्ठप्रकारतायाः सरः परिवाहन्यायेन संयोगविशेषणतोभयसंसर्गतानिरूपकत्वं ताभ्यां ससर्गताभ्यां प्रति स्वविशेष्यद्वयनिरूपणं द्वित्ववद्भेदे संयोगेन कर्तेत्यसंसर्गग्रहस्य तु कर्तृप्रकारतानिरूपितसंयोगसंसर्गता नरूपितद्वित्ववद्भेदविशेष्यताकत्वं प्रतिबध्यतावच्छेदकम्, न तु संयोगसंसर्गावच्छिन्नकर्तृप्रकारतानिरूपितद्वित्ववद्भेदविशेष्यताकत्वं संयोगिसमवायादिपरम्परासंसर्गेण कर्तृविशिष्टबुद्धेरपि प्रतिबध्यत्वप्रसङ्गात्।

अत एव वह्निर्नास्तीत्यादौ वह्नौ समवायेन तदभावे स्वावच्छिन्नप्रतियोगिताकत्वेन संसर्गेणावच्छिन्नमेकमेव कारणत्वम्, न तु स्वातन्त्र्येण वह्नित्वेन वह्निर्नास्तीत्यप्रतीतेः। यदि च क्षितौ द्वित्ववत्कर्तृकत्वबाधे जायमानानुमितिरपि तुल्ययुक्त्या पूर्वानुपस्थितं भेदं क्षितिविशेषणतापन्नकर्तृविशेष्यतया गृह्णाति तदा तादृशज्ञानाव्यवहितोत्तरोत्पत्तिकत्वमेव तज्जन्यतावच्छेदकम् द्वयभिन्नोऽपि गुरुरिति गौरवग्रहस्यापि तद्विशिष्टान्यबुद्धौ प्रतिबन्धकत्वमिति तदभावस्य सहकारित्वमुपपद्यते, नन्वेवमुपाध्यायमतेऽपि द्वयं गुरु [ गुर्विति ] बुद्धेस्तद्विशिष्टान्यबुद्धौ प्रतिबन्धकत्वं द्वयान्योऽपि गुरुरित्युल्लेखकत्वेनाभिमतस्य ज्ञानस्यापि स्वाव्यवहितोत्तरबुद्धौ कारणत्वम्,क्वचिद्द्वयवृत्तिगौरवग्रहेण[1] घटिता कर्त्तरि द्वित्वविशिष्टबुद्धेस्सामग्रीतिसर्वमुपपद्यत इति चेन् उपपद्यतान्न पुनरेतावता सर्वतान्त्रिकसिद्धमनुमानादावपि गौरवग्रहोत्तरबाधादेस्सहकारित्वमपलपितुं शक्यते बलाबलत्वाद्बाधकमिति प्राहुः।

---

१। ग्रहाभावेन, क्वचित्तदितरत्रापि गौरव। ख० पा।

परे[1] तु कुर्वद्रूपत्वजातौ कथं प्रमाणाभावः, अङ्कुरकारितया अवच्छेदकताग्राहकस्य प्रसिद्धजात्यवच्छिन्नत्वबाधेतरजातौ लाघवग्रहेण च सह कृतस्यानुमानस्य सम्भवात् तत एव प्रसिद्ध जातीतरजात्यवच्छिन्नमङ्कुरकारित्वमित्यनुमितिर्जायते इत्याक्षेपे कल्पनागौरवप्रसंगप्रतिहतत्वादिति समाधानं कल्पनागौरवन्त्वभिमते विधेये तत् विशेषणस्य बाध एव, तथा च प्रकृते जातित्वावच्छेदेन प्रसिद्धजातिभिन्नत्वाभावः प्रसिद्धजातिभिन्नत्वावच्छेदेन जातित्वाभावो वा कल्पनागौरवम्, तन्निर्णय एव विशेषदर्शनविधया प्रसिद्धेतरजातिसिद्धविरोधी न सन्देहो मानाभावात्, कल्पनावच्छेदप्रसङ्गाच्च।

एवं प्रसिद्धा एव जातय इत्यनिर्णयतत्सन्देहे च कुर्वद्रूपत्वसिद्धिप्रसंगः, सामान्यादेः प्रसिद्धबीजत्वादिजात्यवच्छिन्नसम्भवादितरबाधाभावात् प्रसिद्धजातिभिन्नजातिसाधकाभावादेव तदसिद्ध्युपपत्तेः। य ऽप्रसिद्धबीजत्वादेस्सामर्थ्यावच्छेदकत्वे समर्थस्य क्षेपानुपपत्त्यादिप्रतिसन्धानवशात् बीजत्वादेः सामर्थ्यानवच्छेदकमवधारयति सकुर्वद्रूपत्वमपि प्रसिद्धजातिभिन्नजातित्वेनानुमामीत, एतदेवं कल्पनागौरवन्नामपदार्थानामियत्तावधारणम्, ग्राह्याभावावगाहित्वादेव सिद्धिविशेषे प्रतिबन्धक एव। शूद्रादेरध्ययननिषेधे न विद्यायां त्रैवर्णिकमात्रवृत्तित्वेऽवधारितेऽपि वोर्षासु रथकार आदधीत, निषादस्थपतिं यजेत् इत्यादि विधिना रथकारपद रूढ्या निषादस्थपतिपदप्रयोगे न चोपस्थितिकारणे य माहिष्यपुत्रो निषादाभिन्नस्थपतौ बाधेन यजनादिकर्तृत्वागमो निराबाधः। विद्यात्रैवर्णिकस्यैवेत्यवधारणस्याधानं त्रैवर्णिकभिन्नस्येति बुद्धावविरोधित्वात्, तदनन्तरमाधानयजनादिना लिङ्गेन रथकारनिषादयोर्विद्यासिद्धिरपि त्रैवर्णिकवृत्तिविद्यायाः सदितरत्र बाधवशात्तद्भिन्नामेवविद्यां विषयीकरोति। न च तत्र विद्यात्रैवर्णिकस्यैवेत्यवधारणम्, विरोधितस्याप्रामाण्यज्ञानानास्कन्दितत्वेनासत्कल्पत्वात्, विद्याऽव्याप्याधानतद्विशेष्यकत्वेन हेतुना त्रैवर्णिकभिन्ने विद्याविरह (१९क) निर्णयस्याप्रामाण्यानुमानात्।

शङ्खत्ववद्विशेष्यकत्वेन पीतत्वभ्रमस्य। न च विद्याविरहवद्विशेष्यकत्वेन त्रैवर्णिकेतरस्मिन्नाधानादिमत्ताज्ञानस्य भ्रमत्वानुमानान्न ततो विद्यानुमितिः स्यादिति वाच्यम्। वेदतात्पर्यविषयवाक्यार्थबुद्धित्वावच्छेदेन भ्रमत्वाभावनिर्णयाव्यावर्त्तकधर्मदर्शनसत्वेन रथकारादावाधादिमत्ताबोधे भ्रमत्वानुमानस्य बाधितत्वात्। तादृशञ्च तात्पर्यविषयत्वं त्रैवर्णिकभिन्नत्वावच्छेदेन विद्यासामान्य-

---

१: मतु। ख० पा।

विरहवत्ताबुद्धौ नास्ति, किन्तु निषादरथकारादिवृत्तितत्तद्विद्याविरहवत्ताबुद्धौ, अत एव शूद्रान्तरस्याधानाद्युपपादिकायामपि विद्यायान्निवारणार्थं रथकारादेरपि विद्यान्तरेऽधिकार इत्यादिकं योगारूढिर्बलीयसीवाक्यात् श्रुतिः श्रेयसी, कर्मधारयात् तत्पुरुषो जघन्य इत्यादि वाक्यपरिशोधकमीमांसासंस्कृतैः न्यायैरवधारणीयमित्यादिकं पदवाक्यरत्नाकरे प्रपञ्चितमस्माभिर्यद्वात्रैवर्णिकभिन्नो विद्याविरह् वा निरग्नैकस्थपतिश्च इ साधनवानिति ज्ञानमनयोरन्यतरपक्षः बाध्यत्वं साध्यं तच्च व्यधिकरणप्रकारावच्छिन्नविषयताकत्वम्, स्वनिरूपकत्वस्वाश्रयाधिकरणवृत्तित्वोभयसंसर्गेण प्रकारतावद्विशेष्यताकत्वेन प्रतिस्वमवच्छिन्नाया प्रतिबध्यतानिरूपकप्रतिबन्धकतावच्छेदकविषयता निरूपकत्वमिति यावत् ।

इत्येवं पक्षतावच्छेदकसामानाधिकरण्यमात्रेणानिर्द्धारितविशेषस्य भ्रमत्वस्यानुमाने पक्षयोरेकतरव्यावृत्तिकामीमांसा भवति चाधानबुद्धेः प्रमात्वे तत्र विद्याविरहबुद्धेर्व्यापकाभावदर्शनविधया विरोधित्वं तस्या यथार्थ्यन्तु तत्राधानादिमत्ताबुद्धेः प्रतियोगिव्याप्यदर्शनविधया विरोधित्वमित्यविशेषेण तदन्यतरत्वसामानाधिकरण्येन हेतुमत्तानिर्णयः तत्रानुमाने च मीमांसापरिशोधितन्यायेनाधानवत्ताबुद्धौभ्रमत्वाभावो निर्णीते तदितरत्वमपि पक्षविशेषणतया भासत इति तदितरनिरूपकतान्य (१६ख) तरत्वावच्छेदेन बद्ध्यत्वानुमित्या विद्याविरहबुद्धिरसत्कल्पेति निराबाधा। रथकारादौ विद्याविशेषानुमितिरित्यधिकमुपरिष्टात् एतादृशस्थल एव फलमुखं गौरवं न दोष इति प्रवादः। यत्र पूर्वोत्पन्नस्य बाधबुद्ध्यादिस्वरूपस्य गौरवस्य मीमांसादिसहकृतेन मानान्तरेण भ्रमत्वग्रहः। यत् पुनः दीधितिकारैः स्मरणान्तरमनन्तसंस्कारकल्पनागौरवं फलमुखत्वाददोष इत्यभिप्रायेण संस्कारस्मरणादावसन्दिग्धव्यभिचारकेन ज्ञानत्वेनैव कारणत्वं नत्वनुभवत्वेन सन्दिग्धव्यभिचारत्वादित्युक्तं तन् चिन्त्यम्। ज्ञानत्वस्य संस्कारजनकतावच्छेदकत्वे बाधकसम्भवात्। तथाहि स्मरणोत्तरद्वितीयतृतीयक्षणावच्छिन्नात्मसंस्कारोत्पत्तितदभावान्यतरवान् सत्त्वादित्यनुमाने प्रसिद्धिसंस्कारोत्पत्तिबाधसंस्कारोत्पत्तयः प्रसिद्धा एवेति गौरवप्रतिसन्धानप्रसिद्धेतरसंस्कारोत्पत्तिसिद्धौ प्रतिरुद्धायां क्लृप्तत्वलाघवबलात् क्लृप्तसंस्कारोत्पत्तीतरतदभावाभिन्ननिरुक्तान्यतरवानित्यनुमित्या मानसविशेषेणबाधितविषयीकृतस्मरणक्षणावच्छिन्नतदात्मनि संस्कारोत्पत्त्यभावस्तदव्यवहितपूर्वक्षणावच्छिन्नतदात्मनि यत्किञ्चित्कारणतावच्छेदकधर्मावच्छिन्नाभावप्रयोज्य इत्यनेन सिद्धेस्तथाविधकारणतावच्छेदकं ज्ञानत्वादिभेदो बाधादेव न भासतेऽनु-

भवत्वान्यजातिषु अन्वयतो व्यतिरेकतो वा व्यभिचारप्रयोजकत्वमुपाधिषु शरीर-गौरवं प्रति संहितमित्यनुभवत्वावच्छिन्नं व संस्कारकारणता सिद्ध्यति। यथा च सकृदनुभूतस्मरणोत्तरस्मरण (१६क) प्रसङ्गो न भवति तथा सिद्धान्ततत्त्वे-विवेचितमस्माभिः।

नन्वेवमसन्निकृष्टातीन्द्रियलिङ्गकानुमितिप्राकालावच्छिन्नात्मनि विशिष्टज्ञानतदभावान्यतरसाधकानुमानेन प्रसिद्धविशिष्टज्ञानबाधतदन्यकल्पना-गौरवसहकारात्प्रसिद्धविशिष्टज्ञानस्य तदभावभिन्ननिरूक्तान्यतरत्रसिद्धेर्व्यभि-चारनिर्णयवशात् विशिष्टज्ञानत्वेन कारणत्वम्भासैत्सीत् किन्त्वगत्या गुरूणापि ज्ञानद्वयेनेति चेत्, एवं सति ज्ञानद्वयतदभावसाधकेनानुमानेनानुमित्यव्यवहित-पूर्वक्षणावच्छेदेनात्मनि[1] ज्ञानद्वयाभावोपि सिद्ध इति तत्रापि कथं कारणताग्रहः, न ह्यनुमितिजनकज्ञानद्वयस्यानु व्यवसायो येन तत् प्रामाण्यं स्यात्।

अथ स्वप्रकाशसाक्षिकमेव ज्ञानद्वयं गौरवसहस्रेणापि न तदभावः। सिद्ध्यति, गौरवं हि पाक्षिकप्राप्तौ विनिगमकम्, न तु तादृप्येण प्रमाणसिद्धस्याप-वादकमिति चेत् सिद्धमेव तर्हि स्वप्रकाशं विशिष्टज्ञानम्। ननु नास्ति स्वप्रकाशता पक्षः किन्तु मुक्तिसुषुप्तिविरहिण्यात्मनि योग्यविशेषगुणः कश्चिदवश्यं सिद्धः तत्र ग्रहणस्मरणात्मकज्ञानद्वयत्वमेव कदाचित्स्यादितिसन्देहो विद्यते प्रसिद्धज्ञान-द्वयभिन्नं ज्ञानद्वयन्नास्तीति गौरवावधारणम्। न च गौरवसन्देहेनेतरकोटिपरिशेषः कल्पनोच्छेदप्रसङ्गादिति चेत्, नास्ति तर्हि एतावन्त्येवविशिष्टज्ञानानीत्यपि कल्पना-गौरवनिर्णयः, तदा तदात्मनि विशिष्टज्ञानाभ्युपगमेऽपि गुणान्तरंमन्तव्यमिति कल्पनालाघवानवकाशात् विशिष्टज्ञानवादिभिर्गुणान्तरन्न मन्तव्यमिति सा-म्यात्। नहि योग्यगुणयोः यौगपद्यसम्भवः, असन्निकृष्टातीन्द्रियलिङ्गकानु-मानपि व्याप्यपक्षधर्माभावबुद्धौकारणबाधः पुनराकाङ्क्षेषु विस्तारान्न निरस्तः, संस्कारे द्वयमेव (२० ख) विशेषो यदसुषुप्तस्य जीविनो योग्यविशेषगुणोत्पत्तिनि-यमो गुणान्तरोत्पत्त्याऽवश्यमुपपाद्य इति स्मरणोत्पत्त्यनन्तरं संस्कारोत्पत्तिक-ल्पनमप्रामाणिकमेव। यदि च वह्निव्याप्यं यद्वह्निव्याप्यधूमकालीनं धूमवत्पर्वत-सामानाधिकरणं शिखरं तद्वान् पर्वत इति विशिष्टज्ञानस्यानुमितिकारणतायां सर्वा-भ्युपेतायामवच्छेदकं कल्प्यमाननिरूक्तविशिष्टज्ञानत्वस्य शरीरगौरवेणेतरबाधा-मुपस्थितनानाज्ञानत्वपर्वतज्ञानत्वादीनामतिप्रसञ्जकत्वेन तत्सर्वं व्युदस्य लघु-तरमनतिप्रसञ्जकवह्निव्याप्यधूमवत् पर्वतज्ञानोभयत्वं तदुभयपरस्परवैशि-ष्ट्यं वा व्यवतिष्ठते।

---

१। काला ख० पा।

भवतु वा वह्निव्याप्यधूमज्ञान धूमवत् पर्वतज्ञानयोः प्रत्येकमेव धूमलिङ्गकानुमितिजनकत्वमभ्युपेयताञ्च परस्परसहकारिणोरेकत्र सामग्यामभिनिवेशः। एवञ्च वह्निव्याप्यधूमवान पर्वत इति विशिष्टज्ञानवृत्तिरपि धूमलिङ्गकानुमिति कारणताया अवच्छेदकतानिरूपकत्वानुमानेनापि क्लृप्ता ज्ञानद्वयत्वादिवृत्तिनिरूढावच्छेदकतैव विषयीक्रियते, नतु सर्वाप्रसिद्धा विशिष्टज्ञानत्वादिवृत्तिरवच्छेदकता क्लृप्ता एवेति गौरवग्रहसत्वादिति विभाव्यते तदा विजयन्तां प्राभाकराः किमत्र कुर्म इति प्राहुरिति संक्षेपः ॥ लेखकस्य शुभम् ॥

इति महामहोपाध्याय
श्रीगोकुलनाथोपाध्याय
विरचितं लाघवगौरवरहस्यं समाप्तम्।
सम्पूर्णोऽयंग्रन्थः।
शाके १७४७ मार्ग शुक्लाष्टम्यां शनौ कनकपुरवासिना लिखितमिदं
श्री लेखनाथेन
स्वार्थम् ॥ शुभमस्तु ॥



# सिद्धिप्रतिबन्धकतारहस्यम् ।

ॐनमोगणेशाय ।

ननुसिद्धेः प्रतिबन्धकत्वेमानाभावः, न चानुमित्यन्तरापत्तिः[1], द्वितीयानुमिताविष्टापत्तेः, उत्तरकालेपरामर्शाभावात् । न च लिङ्गोपधानात्तत्सम्भवतदनभ्युपगमात्[2][3] । न च वह्निव्याप्यधूमवत्वमेव यत्र पक्षतावच्छेदकंतत्रानुमित्यापत्तिः, पक्षतावच्छेदकस्यानुमितौविषयत्वेपि पक्षतावच्छेदकनिरूपितसम्बन्धस्यहेतावभानात् पक्षतावच्छेदकलिङ्गितज्ञानस्यानुमितावहेतुत्वात् ।

अत्रकेचित्, एवं सतिसंशयोत्तर प्रत्यक्षानुव्यवसायोनस्यात्, अनुमितिसामग्रीसत्वात्, सिद्धेः प्रतिबन्धकत्वेतु प्रत्ययत्वान्नानुमितिसामग्री भवत्यनुव्यवसायः ।

न चानुमित्यन्तरमनुव्यवसायस्स्यात्, तदानींपरामर्शाभावा देवानुमितिसामग्र्यभावादितिवाच्यम् । प्रत्यक्षेविषयस्यकार्यं स ह भावेनैवकार्यजनकत्वात् अनुव्यवसायाभावेतादृश प्रत्यक्षेमानाभावेनसमानविषये प्रत्यक्षसामग्र्या बलवत्वमित्यपिभज्यत इति ।

न च तथा सत्यपि, प्रत्यक्षमेवकुतो न भवतीतिवाच्यम्, इन्द्रियसन्निकर्षा दिविच्छेदेनसामग्र्यभावात्, नचानुव्यवसायेइच्छासहकरात् तथा सत्यपितदिच्छासामग्र्यभावस्य प्रतिबन्धकत्वकल्पनापत्तेरितितत्तुच्छम् । किमत्रापाद्यते व्यवसायान्तर मनुव्यवसायोभवतितन्नस्या दितिवानैतत्सम्भवः, यत्र कालेयत्रापामर्षधीर्वातत्सामग्रीवा पक्षतावच्छेदकावच्छेदेन हेत्वभावज्ञानं वातत्रानुमितिसामग्र्यभावातितिदिक् ।

वयन्तु वह्निव्याप्यवत्वंपक्षतावच्छेदकंवह्निरेवसाध्यः सएवचह्नितः (?) तत्र पक्षतावच्छेदकावच्छेदेन व्याप्यवत्वभानात् तदवच्छेदेनसाध्यज्ञानस्यैवहेतुज्ञानरूपत्वात्सिद्धेसिद्धेरप्रतिबन्धकत्वाद।नन्यापत्तिरितिब्रूमः । केचित्तु तत्र वह्निव्याप्यवान् तद्व्याप्य वानित्या दिक्रमेणतद्व्याप्य सहस्रावगाहिसमूहालम्बनानेकपरामर्शः तत्र सिद्धेरप्रतिबन्धकत्वेचवह्निविधेयकानुमिति धारापत्तिरित्याहु । समाप्तमिदंसिद्धिप्रविन्धकता रहस्यमितिशुभम् ॥

---

१ अनुमित्यनन्तरापत्तिः = एकानुमित्यनन्तरमपरानुमित्यापत्तिः । २ तत्सम्भवः = परामर्शसम्भवः । ३ तत् = लिङ्गोपधानम् ।

# शुद्धिपत्रम्

## उपोद्धाते

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| खष्टा | खण्टा | १ | १ |
| गोस्व | गोस्वा | ,, | १७ |
| षढ | षट् | ,, | २१ |
| व्यप्य | व्याप्य | २ | ३ |
| पुस्सरं | पुरस्सरं | ,, | ६ |
| कर्न्तुः | कर्त्तुः | ,, | १२ |
| कर्त्ता | कर्त्तारः | ३ | ७ |
| दान | दान् | ,, | १२ |
| यरि | परि | ,, | २० |
| स्य | रहस्य | ,, | २७ |
| राब | राज | ४ | १२ |
| मिच्या | मिथ्या | ,, | १८ |
| मांस | मास | ,, | २२ |
| षट | षट् | ५ | १० |

## आचार्यमतरहस्ये

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| लिङ्गका | लिङ्गकवह्नय | १ | ७ |
| लोकलिङ्गक | लोकादिलिङ्गक | २ | ४ |
| धमि | धर्मि | ,, | ८ |
| वुद्धीनां वह्निमद्धो दवहयभावा-वगाहिजन्या | वुद्धिजन्या | ३ | २ |
| तना | नाना | ,, | ६ |
| वच्छि | वच्छिन्न | ,, | २६ |
| स्वस्य | त्वस्य | ,, | २८ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सहकृतपरा | सहकृतधूमपरा | ३ | ३० |
| सत्वेधूम | सत्त्वे वह्निव्याप्यधूम | ४ | ६ |
| चारित | चरित | ,, | १० |
| प्रसङ्गः | प्रसङ्गात् | ,, | १७ |
| तावच्छे | तातद्वच्छे | ,, | २० |
| हेतुत्वे | हेतुत्वे | ५ | २ |
| पर्वता | पर्वतत्वा | ५ | २२ |
| धम | धर्म | ,, | २२ |
| विश्प्ट | विशिष्ट | ,, | २३ |
| व्यमि | व्यभि | ,, | २६ |
| दशित | दर्शित | ६ | ३ |
| पवत | पर्वत | ,, | ४ |
| पवतो | पर्वतो | ,, | ६ |
| पवतो | पर्वतो | ,, | १२ |
| अत्रा | अत्र | ६ | १५ |
| वह्नितत्व | वह्नित्व | ,, | १६ |
| वह्न | वह्नि | ,, | १६ |
| व्याप्य | व्याप्त्य | ,, | २१ |
| गाह्निना | गाह्नि | ७ | ५ |
| काच्छेदेन | कावच्छेदेन | ,, | १३ |
| विधेयां | विधेयांशे | ,, | १८ |
| विरहात् । वस्तुतस्तु | विरहात्, अथ तादृशस्थल- मताविशेष इति चेत् किं तेन वस्तुतस्तु | ८ | १५-१६ |
| सामग्या | अनुमित्यादिसामग्र्याः | ,, | १७-१८ |
| कल्प्त | क्लृप्त | ९ | ६ |
| च्छेद | च्छेदक | ,, | १० |
| धर्माच्छिन्न | धर्मावच्छिन्न | ९ | १७ |
| निणयं | निर्णयं | ९ | २६ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| विछन्न | च्छिन्न | १० | ६ |
| धिशेष्य | विशेष्य | ११ | १६ |
| व्यता | व्यताक | ,, | २० |
| काय | कार्यं | ,, | २३ |
| धम | धूम | ,, | २८ |
| वावच्छिन्नं | त्वावच्छिन्नं | ,, | २६ |
| वच्छिन्न | वच्छिन्नं | १२ | २ |
| हेतुत्व | हेतुत्वं | ,, | ३ |
| मशस्य | मर्शस्य | ,, | ४ |
| धमि | धर्मि | ,, | ४ |
| पूव | पूर्व | ,, | ८ |
| वछिन्न | वच्छिन्न | ,, | १५ |
| व्यमि | व्यभि | ,, | १८ |
| रिक्तत्वेन | रिक्तेन | ,, | १६ |
| काञ्चि | कञ्चि | १३ | २ |
| घुमय | घूभय | ,, | १२ |
| धमि | धर्मि | ,, | १२ |
| वोंध | बोध | ,, | १६ |
| धमि | धर्मि | ,, | १६ |
| माना | भाना | ,, | २७ |
| व्यमि | व्यभि | ,, | २६ |
| व्यमि | व्यभि | १४ | ४ |
| लाध | लाघ | ,, | ८ |
| निश्चयत्वा | निश्चयविशिष्टत्वा | ,, | १६ |
| दशायां | दशायां | १५ | १८ |
| व्याप्या | व्याप्य | ,, | १८ |
| व्यमि | व्यभि | १६ | ८ |
| जन्यता | कस्य जन्यता | ,, | १५ |

| अशुद्धम | शुद्धम | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| सामग्य | सामग्र्य | १६ | १६ |
| पर्वती | वह्निव्याप्यधूमवान् पर्वतो | ,, | २८ |
| निश्चयत्वा | प्रकृतनिश्चयत्वा | १७ | ५ |
| वद्वत्ति | वद्व त्ति | ,, | ८ |
| हेतुना | हेतुत्वा | ,, | १६ |
| व्याप्यो | व्याप्यधूमो | १६ | २५ |
| पर्वतोवह्निव्याप्यधूमवान्पर्वतो | पर्वतो वह्नि | २० | ३ |
| मश | मर्श | ,, | ६ |
| पवत | पर्वत | ,, | ६ |
| पवत | पर्वत | ,, | ६ |
| पवत | पर्वत | ,, | १८ |
| स्वीकार | स्वीकारे | २१ | ७ |
| धर्मान्नो | धर्मावच्छिन्नो | ,, | ७ |
| वका | वच्छेदका | ,, | १६ |
| व्यवे | व्यव | ,, | १७ |
| याथा | यथा | २२ | १४ |
| मिद्य | भिद्य | ,, | २२ |
| विशष्य | विशेष्य | २३ | १ |
| जन्यता प्रकार | जन्यतत्तत्प्रकार | ,, | १४ |
| ततः | यतः | २५ | ५ |
| मावः | भावः | ,, | २१ |
| प्रत्यस्त्वे | प्रत्यक्षे | २७ | ४ |
| प्रत्पक्षा | प्रत्यक्षा | ,, | ६ |
| वह्नय | वह्निव्याप्या | ,, | २८ |

नव्यमतरहस्ये

| | | | |
|---|---|---|---|
| नव्यति | प्रति | २६ | १४ |
| सामा | समा | ३० | ३ |
| भावा | भाव | ३१ | २ |

| अशुद्धम् | शुद्धम | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| द्वा | द्रव्य | ३२ | ८ |
| भाव वृत्ति | भाववदवृत्ति | ३३ | १ |
| व्याति | व्याप्ति | ३३ | १० |
| नश्च | निश्च | ३४ | १८ |
| व्याप्यत्वा | व्याप्यधूमत्वा | ,, | २२ |
| दशित | दर्शित | ३७ | १० |
| पवत्त | पर्वत | ,, | १० |
| ह्नि | वह्नि | ,, | १४ |
| दुवच | दुर्वच | ३८ | १ |
| कचि | केचि | ,, | २१ |
| ज्ञनी | ज्ञानी | ३६ | ४ |
| संसर्गा | संसर्गा | ४१ | ३ |
| वाध | वाधादि | ,, | ५ |
| तन्मते | तन्मतं | ४२ | २५ |
| मते | मतं | ४२ | २५ |
| हेतुत | हेतुता | ४३ | १ |
| वच्छेदक | वच्छेदकतावच्छेदक | ४३ | १४ |
| योगता | योगिता | ४४ | ४ |
| ल्लिङ्गक | ल्लिङ्गके | ४५ | ११ |
| मश | मर्श | ४६ | १ |
| व्याप्या | व्याप्यां | ,, | १ |
| ज्ञानत्वे | ज्ञानसत्वे | ,, | ८ |
| यत्रन | यत्र | ,, | १८ |
| स्तदत्तु | स्तत्र तदनु | ४७ | २ |
| दर्शित | दर्शितोभय | ४६ | १२ |
| स्वात् | स्यात् | ,, | १४ |
| न्नव | न्नाव | ५० | ३ |
| कार | प्रकार | ,, | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| परामर्श | द्वितीयपरामर्श | ५३ | ५ |
| मेदा | भेदा | ,, | १३ |
| त्वा | स्वा | ५४ | ७ |
| स्वावच्छिन्न | तथाविधस्वावच्छिन्न | ,, | ६ |
| माव | भाव | ५५ | १ |
| धूमलिङ्गक | धूमलिङ्गालोकलिङ्गक | ,, | ८ |
| सित | स्तित | ५७ | १७ |
| तर्वि | तर्हि | ५८ | १८ |
| णां | णं | ६० | ६ |
| कस्या | न कस्या | ६१ | ६ |
| अनुमिति | अनुमितिसामग्री | ६३ | २ |
| नद्यति | द्यति | ६४ | ३ |
| काय | कार्य | ,, | ४ |
| मावेन | भावेन | ,, | ६ |
| धिकरण | धिकय | ,, | १० |
| त्वेऽमि | त्वेऽनुमि | ६५ | १० |

ज्ञानद्वयकारणताविचारे

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| वच्छिन्नव्याप्ति | वच्छिन्नविशेष्यकव्याप्ति | ६७ | १० |
| धर्मी | धर्म | ६८ | ११ |
| मूत | भूत | ,, | १४ |
| व्याहृयं | व्याप्त्यं | ७० | १३ |
| पच | तत्र पच | ७१ | १५ |
| अस्माकन्तु | अस्माकन्तु तत्र | ७२ | ४ |
| क्रियते | क्रियेत | ७३ | १ |
| तत्रापि | तत्रापत्ति | ,, | १३ |
| सत्,वह्नि | सत्,तथा हि | ७४ | १ |
| स्वन | स्वनि | ,, | २१ |
| अस्ये | अस्त्वे | ८० | २ |

## प्रतियोगिज्ञानकारणताविचारे ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| प्रमेयत्वस्य | प्रमेत्यस्य | ८२ | २० |
| त्वानि | त्वादीनि | ८५ | ६ |
| हेतु | हेतुः | ,, | १२ |
| नायात् | नायातु | ,, | १२ |
| तत्त्वभावात् | तत्त्वरूपनिरवच्छिन्नत्वाभावात् | ८६ | १ |
| स्थले | स्थले | ८६ | ३ |
| निर्विकल्पकत्वात् | निर्विकल्पकस्यार्थायातत्वात् | ८७ | १७ |
| तभ्रम | तद्भ्रम | ८८ | २ |
| व्याप्त्यादि | व्याप्त्या | ८८ | १८ |
| स्वीकारात्,तथा च | स्वीकारात्, यदि चानुगतभ्रमत्वनिरुक्तावाग्रहस्तदा सम्बन्धावच्छिन्नाभाववद्वयधिकरणसंसर्गताकोऽप्यभावः स्वीक्रियतामविरोधात् तथा च | ८६ | ६ |
| योग | योगा | ८६ | ६ |
| तत्कज्ञानं | तत्कज्ञानं | ,, | १६ |
| पद्यत | पाद्यत | ६२ | १६ |
| विषय | विषयतया | ६२ | २४ |
| योगि | योगित्व | ६३ | १७ |
| सम्भूप | सम्भूय घटो नास्तीति | ६४ | ६ |
| भावा | भाव | ६४ | ६ |
| स्वीय | स्वीया | ६४ | १६ |
| च्छिन्न | च्छिन्ना | ६५ | ६ |
| धमि | धर्मि | ६७ | ५ |

लाघवगौरवरहस्ये

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| अवनिपवन .. ... .. | प्रवहपवनवेगघट्टितोऽपि स्खल- तिन यो जगदण्डपिण्डभारः- लघुगुरुतुलनातुलाप्रकाण्ड- दृढिमगुणः स भवद्गुणत्रयस्य ॥ | ९८ | १ |
| सख्यं | संख्य। | ,, | ३ |
| बुद्धित्वं | बुद्धित्वं तत्प्रकारक बुद्धित्वं वा | ,, | १३ |
| वच्छेदक | वच्छेदकत्व | ९९ | २१ |
| द्विती | द्वितीय | १०० | २० |
| ग्र्हणे | ग्रहणेन | ,, | २१ |
| तद्व्या | तद्व्या | १०२ | ९ |
| र्व्यभि | र्व्यभि | ,, | १६ |
| मत्वत्वा | मत्वा | १०३ | ४ |
| वह्नित्व | वह्नि | १०४ | १० |
| अवच्छेद | तावच्छेद | १०५ | ११ |
| भाना | माना | ,, | २८ |
| प्रत्येम | प्रत्येक | ,, | ३० |
| विशिष्टशिष्ट | विशिष्टवैशि | १०६ | १ |
| वह्न | वह्नि | ,, | ४ |
| वज्ञा | वैज्ञा | ,, | ५ |
| वत्तित्वं | वृत्तित्वं | ,, | १७ |
| स्वरूप | रूप | ,, | १६ |
| ताकि | तार्कि | ,, | २२ |
| द्धमा | द्धर्मा | ,, | २६ |
| रिता | रितायाः | ,, | २८ |
| दिशे | विशे | १०७ | ६ |
| वुद्धि | वुद्धिं | ,, | २० |
| यागिता | योगिता | ,, | २२ |
| वत्ति | वृत्ति | १०९ | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पं० तौ |
|---|---|---|---|
| तायाभिन्न | तायाऽभिन्न | १०६ | ११ |
| वत्ति | वृत्ति | ,, | १३ |
| नरज | रज | ,, | १६ |
| वत्ति | वृत्ति | ,, | २१ |
| वत्ति | वृत्ति | ,, | २३ |
| वत्ति | वृत्ति | ,, | २४ |
| वत्ति | वृत्ति | ,, | २६ |
| भावा | भावो | ११० | १ |
| कर्त्त | कर्त्तु | ,, | १० |
| नत्व | नत्व | ,, | १२ |
| वत्ति | वृत्ति | ,, | २४ |
| वत्ति | वृत्ति | ,, | ,, |
| वत्ति | वृत्ति | ,, | २८ |
| वत्ति | वृत्ति | ,, | ३० |
| मानो | मानेन | १११ | १० |
| क्षेपे | क्षेप | ,, | ११ |
| द्रव्य | द्रव्ये | ,, | १५ |
| वत्तावाः | वत्तायाः | ,, | १७ |
| धरणित्वा | धरणिसेदत्वा | ११२ | १८ |
| स्माद्वया | स्माद्वपा | ,, | २६ |
| तत्त्वा | तत्त्वा | ११३ | १५ |
| वव | वच्च | ,, | १९ |
| क | क | ,, | २४ |
| सत्वाव | सत्वात्त | ,, | ३० |
| लाथ | लाघ | ११४ | १ |
| सिद्ध | प्रसिद्ध | ,, | ८ |
| गाव | गाह | ,, | १६ |
| मानव | मानस्य | ,, | १६ |
| प्रसिद्ध | प्रसिद्ध | ११६ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| तदृशा | तादृशा | ११६ | १८ |
| नत्वेवं | नन्वेवं | ,, | २६ |
| कत्वमपि | कत्वं | ११७ | ६ |
| पयव | पर्यव | ,, | ७ |
| कतृ | कर्तृ | ,, | १४ |
| न | नच | ,, | ३० |
| वथा | तथा | ,, | ,, |
| क्व | वत् | ,, | ,, |
| सीये | सीय | ११८ | १० |
| ज्ञान | ज्ञानं | १२० | ३ |
| ताया | तायां | ,, | ५ |
| त्याद्य | त्वद्य | ,, | १२ |
| आमा | आत्मा | ,, | १४ |
| अन पत्या | अनायत्या | १२१ | १८ |
| व्यञ्ज | र्व्यञ्ज | ,, | २१ |
| धभि | धर्मि | १२२ | १६ |
| वुद्धि | वुद्धि | ,, | १७ |
| नतु | नतु | १२३ | ३ |
| भानं | भानं | ,, | २६ |
| धमि | धर्मि | १२४ | ८ |
| वछेद | वच्छेद | ,, | ,, |
| सश | संश | ,, | २० |
| मात्रस्य | स्यन्दमात्रस्य | १२५ | ४ |
| स्वा | स्वाप्य | ,, | ७ |
| निया | निर्या | ,, | १६ |
| तत्त्वो | तद्बु | ,, | २० |
| नात्र | मात्रे | ,, | २५ |
| ताण | वार्ण | १२६ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| अवग | अवगा - | १२६ | १५ |
| व्यापकेन | व्यापकेनसंयोगेन | ,, | १८ |
| विशस्य | विशेष्य | १२८ | ३ |
| विशेष्य द्वय | विशेष्यताद्वय | ,, | १२ |
| लक्र | लिङ्ग | ,, | १३ |
| यड | य स्तु | १२९ | १४ |
| वीर्षांसु | वर्षांसु | ,, | १६ |
| स्थपति | स्थपतिं | ,, | ,, |
| जिया | यथा | १३० | २ |
| स्वार्थं | नवारथ | ,, | ,, |
| योगा | योगात् | ,, | ३ |
| स्माभि | स्माभिः | ,, | ५ |
| भवा | आथा | ,, | ६ |
| भावो | भावे | ,, | १५ |
| यथा | यथा | ,, | २४ |
| सन्धान | सन्धानवशात् | ,, | २५ |
| रूढी | रूढा | १३० | २६ |
| न्मासे | न्माद्वै | १३१ | ८ |
| सुपुप्ति | सुषुप्ति | ,, | १२ |
| प्रसिद्ध | ननु प्रसिद्ध | ,, | १६ |
| ज्ञाना | ज्ञानान | ,, | १९ |
| मानपि | मानेपि | ,, | २२ |
| राकाषु | राकारेषु | ,, | ,, |
| साना | समा | ,, | २६ |
| कवेन | कत्वेन | ,, | २८ |

सिद्धि प्रतिबन्धकतारहस्ये ।

| | | | |
|---|---|---|---|
| त्यद्ये | प्रत्यद्ये | १३३ | ११ |
| कोचन | केचित्तु | ,, | २१ |

---

एवं कृतेऽपि संशोधने मदीयदृष्टिदोषेण यन्त्रालय कार्यकारिणा मनवधानाच्च संजाता अशुद्धयः स्वबुद्धैयूव प्रथमं संशोध्य पठन्तु पाठयन्तु विद्वांस इतिभूय ः प्रार्थये ॥ इति शिवम् ।